कीर्तिकल्लोलिनी अने सुकृतसंकीर्तनमां आपवामां आव्यो छे.[1] आ ज अमरचंदे 'सिद्धांतार्णव' नामक महाग्रन्थ रच्यो हतो एवुं अनुमान छे. कारण तत्त्वचिंतामणिमां तार्किक गंगेश उपाध्याये सिंहव्याघ्र लक्षणो मुक्यां छे जे आ बन्ने माटे हशे एम डॉ. सतीशचंद्र विद्याभूषण माने छे.[2]

तेमनी पछी धर्मगादी उपर श्रीहरिभद्रसूरि आरूढ थया जे सच्चारित्र अने बीजा प्रशस्य गुणोने लई 'कलिकाळ गौतम'बिरुदथी ख्यातकीर्ति थया. तेमना शिष्य विजयसेनसूरि थया जे अगणित गुणोना भंडार समान अने व्याख्यान वाचस्पति हता. तेमना सद्धर्मप्रेरक व्याख्यानो मानवहृदयने सचोट असर करतां. तेमनी पुनीत पावन व्याख्यानगंगा 'वनराजविहार'तीर्थरूप अणहिलपुर पाटणना पंचासर मंदिरमां वहन करती हती. आ मुनिराज वस्तुपाळना परमगुरु हता. वस्तुपाळने तेनां दानो, धर्मकार्यो अने यात्राओ करवानी मुख्य प्रेरणा, धर्मोद्धारक आ महान् आचार्य पासेथी ज मळी हती, एम अनेक ग्रन्थकारोए नोंध्युं छे. वस्तुपाळे स्थापित करेला केटलांक जिनबिंबोना स्थापक पण आ ज विजयसेनसूरि हता, एम ते बिंबोनी नीचेनी प्रशस्तिओ उपरथी ज्ञात थाय छे.[3] तेमणे कोई ग्रन्थो लख्या हशे के केम ? ते संबंधी वधु माहिती मळी शकी नथी. तेमना विद्वान शिष्य उदयप्रभसूरि थया जे आ महाकाव्यना प्रणेता हता. तेओ उच्च कोटीना विद्वान हता एम तेमणे रचेला अनेक ग्रन्थो उपरथी मालूम पडे छे. आ महाकाव्य तेमणे गुरु श्रीविजयसेनसूरिना आदेशथी रच्युं हतुं तेनी सगर्व नोंध ग्रन्थप्रशस्तिमां लीधी छे.[4] आ सिवाय शत्रुंजय यात्रानुं विवरण करती ऐतिहासिक हकीकतोथी सभर संस्कृत काव्यप्रशस्ति सुकृतकीर्तिकल्लोलिनी रची छे. जेने शत्रुंजय उपर वस्तुपाळे बंधावेल इंद्रमंडपमां शिलापट्टपर (पथ्थरमां) कोतरवामां आवी हती. ते हकीकत आगळ पण आपी गया छीए. आ बन्ने ग्रन्थो उपरांत उदयप्रभसूरिए ज्योतिष विषयक आरंभसिद्धि ग्रंथ, संस्कृत नेमिनाथ चरित्र, षडशीति अने कर्मस्तव उपर टिप्पण, धर्मदासगणिकृत उपदेशमाळा उपर उपदेशमालाकर्णिका नामक टीका वगेरे ग्रन्थो लख्या छे. आ महाकाव्य तेमणे मलधारी गच्छीय नरचंद्र मुनि पासे संशोधाव्युं हतुं, तेनी नोंध लई अंतमां आ धर्मसंहिता चिरकाळ सुधी विद्वज्जनोना हृदयकमळमां धर्मनी सौरभ प्रकटावो एवो आशीर्वाद आपतां सूरि श्री ग्रन्थनी इतिश्री करे छे. आवी ज प्रशस्तिओ आ ग्रन्थकारे स्वरचित बीजा ग्रन्थोमा पण मुकी हशे. परंतु ते बधा ग्रंथो मेळवी तेनी पूरती तपास करवानो लाभ मळी शक्यो नथी. अनुमानथी लागे छे के ते बधामां आवी ज हकीकतो जुदा जुदा स्वरूपे अलंकारप्रचुर भाषामा गुंथयामा आवी हशे.

---

१ (१) सुकृतकीर्तिकल्लोलिनी, श्लोक, १५४ (गा. ओ. सी. मा हमीरमदमर्दन नाटकसाथे छपायेल)
(२) शैशवेऽपि मदमत्तवादविद्वारवारणनिवारणक्षमो ।
यो जगाद जयसिंहभूपतिर्व्याघ्रसिंहशिशुकावितिं स्वयम् ॥ २० ॥—सुकृतसंकीर्तन, सर्ग ४

२ जुओ 'जैन साहित्यनो संक्षिप्त' इतिहास पा. २५०

३ आबुना लूणसिंह वसहिकामांनी नेमिनाथ प्रभुनी स्थापना विजयसेनसूरिए करी हती, एम तेनी प्रशस्ति उपरथी जणाय छे. जुओ 'प्राचीन जैन लेख समह'मांनी तेनी प्रशस्ति. तारंगा उपर वस्तुपाळे अजितस्वामिचैत्यमां आदिनाथ भगवानना जिनबिंबनो गोखलो बंधाव्यो हतो तेमां आदिनाथनी प्रतिष्ठा करावनार विजयसेनसूरि हता एम त्यांना संवत १२८५ ना शिलालेख उपरथी जणाय छे. जुओ 'प्राचीन जैन लेखसंग्रह' मां ते लेख.

४ इत्युक्त्वा गतयोस्तयोरथ पयो दृष्टे प्रभातक्षणे, विज्ञाप्य स्वगुरोः पुरः सविनयं नम्रीभवन्मौलिना ।
प्राप्याऽऽदेशममुं प्रभोर्विरचयामासे समासेदुषा, प्रागल्भीमुदयप्रभेण चरितं निस्यन्दरूपं गिराम् ॥ १२ ॥
—धर्माभ्युदयमहाकाव्ये अंत्यप्रशस्ति.

## § १२. ग्रंथनो रचनाकाळ

आ ग्रन्थ क्यारे रचायो ते माटे ग्रन्थकारे कांई पण उल्लेख कर्यो नथी. वस्तुपाळे शत्रुंजयनी अनेक यात्राओ करी हती तेमां आ कई यात्रानुं वर्णन छे ते पण स्पष्ट नथी. परंतु आ ग्रन्थ क्यारे लखायो तेनी नोंध ग्रन्थप्रशस्तिना अंतमां लेवाई छे. तेमां ते संवत १२९० ना चैत्र सुदि ११ ने वार रविना दिवसे स्तंभतीर्थमां (खंभातमां) आ महाकाव्य वस्तुपाळे लखाव्युं ऐवो स्पष्ट उल्लेख छे.[१] आथी आ ग्रन्थ ते अगाऊ रचायो हतो एम चोकस लागे छे. वस्तुपाळनी अनेक यात्राओ करतां आ यात्रानुं वर्णन एक करतां वधु विद्वानोए आलेख्युं छे. तेथी बधी यात्राओमां आ तीर्थयात्रा अननुभूत हशे तेमां शंका नही, अर्थात् ते महायात्रा हशे एम मानुं छुं. प्रबंध चिंतामणिमां वस्तुपाळे महायात्रानो प्रारंभ संवत १२७७ मां कर्यो हतो एम जणाव्युं छे.[२] आ हकीकतने गिरनारना संवत १२९३ ना शिलालेखथी पुष्टि मळे छे तेमां पण वस्तुपाळे संवत १२७७ मां संघपति बनी यात्रा कर्यानुं सूचव्युं छे. आथी वस्तुपाळे संवत् १२७७ मां महायात्रा करी हती एम लागे छे. आ तीर्थयात्रामांथी आव्या बाद थोडाक वखत पछी आ ग्रन्थनी रचना करवामां आवी होवी जोइए; ऐटले ते संवत १२७७ थी ९० सुधीमां रचाई गयो हतो एमां शक नथी. अने ते प्रमाणे धर्माभ्युदय काव्यनी रचना संवत १२७९-८० मां थई हशे एवुं अनुमान थाय छे. आ अनुमान करवानुं खास कारण तेना माटे सीधे सीधा प्रमाणोना अभावने लईने छे. छतां ते १२९० मां लखायो हतो एवो स्पष्ट पुरावो मळतो होवाथी ते वस्तुपाळना समकाळमां संवत् १२९० पहेलां रचायो हतो एम स्पष्ट रीते साबीत थाय छे.

---

१ सं० १२९० वर्षे चैत्र शु० ११ रवौ स्तम्भतीर्थवेलाकूलमनुपालयता महं० श्रीवस्तुपालेन श्रीधर्माभ्युदयमहाकाव्य पुस्तकमिदमलेखि ॥

२ 'अथ सं० १२७७ वर्षे सरस्वतीकण्ठाभरणलघुभोजराजमहाकविमहामात्यश्रीवस्तुपालेन महायात्रा प्रारेभे ॥'

—प्रबन्धचिन्तामणि, पा० १६२. श्री दु. के. शास्त्रि संपादित,



॥ अर्हम् ॥

॥ श्रीमद्विजयानन्दसूरिपादपद्मेभ्यो नमो नमः ॥

नागेन्द्रगच्छाधिपतिभिः श्रीमद्भिरुदयप्रभाचार्यवरैर्विरचितं

# धर्माभ्युदयमहाकाव्यम् ।

## ( सङ्घपतिचरितापरनामकम् )

---

॥ ९० ॥ ॐ नमः सर्वज्ञाय ॥

### मङ्गलम्

अर्हल्लक्ष्मीं स्तुमः श्रेष्ठपरमेष्ठिपदप्रदाम् । यत्पुरः किङ्करायन्ते, सुरा-ऽसुर-नरश्रियः ॥ १ ॥
सम्भूय सकलैः कल्पपादपैरिव कल्पितः । युगादिजिनकल्पद्रुर्लोकोत्तरफलोऽस्तु वः ॥ २ ॥
जयन्ति शान्तिनाथस्य, क्रमपेङ्खनखार्चिषः । विश्वविश्वविपद्ध्वान्ततान्तिशान्तिकहेतवः ॥ ३ ॥
नेमेर्नमत सौभाग्यमजिह्मब्रह्मचारिणः । ध्यानाद् यस्य ययौ राजीमती स्वकाऽपि निर्वृतिम् ॥ ४ ॥
मूर्ध्नि पार्श्वप्रभोः सप्त, फणाः सन्तु सतां श्रिये । जितान्तःशत्रुषट्कस्य, स्वस्य च च्छत्रसन्निभाः ॥ ५ ॥
वीरः श्रियेऽस्तु व्याख्यासु, यद्दन्तकिरणाङ्कुराः । दधुर्मौलिषु नम्राणां, मङ्गल्यामक्षतश्रियम् ॥ ६ ॥
तिरश्चोऽपि विपश्चित्त्वं, नीर-क्षीरविवेचने । हंसस्य यत्पदोपास्त्या, स्तुमस्तां श्रुतदेवताम् ॥ ७ ॥

### ग्रन्थकृतः पूर्वाचार्याः

गौतमं तमहं वन्दे, यः श्रीवीरगिरं पुरा । अङ्गत्रयमयीं प्राप्य, सद्यश्चक्रे चतुर्गुणाम् ॥ ८ ॥
गुरुः श्रीहरिभद्रोऽयं, लेभेऽधिकवचस्थितिः । मोहद्रोहाय चारित्रनृपनाशीरवीरताम् ॥ ९ ॥
तमस्तोमच्छिदे स श्रीसिद्धसेनदिवाकरः । गगनं व्यानशे यस्य, कलापूर्णो यशःशशी ॥ १० ॥
हरिभद्रविभुर्विद्यास्थानकानि चतुर्दश । लब्ध्वा शतगुणान्[1] जैनग्रन्थवृक्षानरोपयत् ॥ ११ ॥
राजा लुलोठ पादाग्रे, जिह्वाग्रे च सरस्वती । यस्य शश्वन्मुदे स श्रीहेमसूरिर्नवः दिवः ॥ १२ ॥[2]
नरचन्द्रमुनीन्द्रस्य, विश्वविद्यामयं महः । चतुरन्तधरित्रीशसभ्यैरभ्यर्चितं स्तुमः ॥ १३ ॥
जीयाद् विजयसेनस्य, प्रभोः प्रातिभदर्पणः । प्रतिबिम्बितमात्मानं, यत्र पश्यति भारती ॥ १४ ॥

---

१ 'नवृक्षावृक्षा' खंता० ॥ २ द्वादशश्लोकानन्तरं खंता० पुस्तके श्लोकोऽयमधिक उपलभ्यते—

तस्य श्रीवज्रसेनस्य, गौरवं ध्येयमीदृशम् ।
धूपप्रसविनी यस्य, गौरवन्ध्येयमीक्ष(क्ष्य)ते ॥

सङ्घमाहात्म्यम्

व्यासाशेषहरिश्चतुर्मुखतया तन्वन्नदीनां स्थितिं,
स स्तुत्यः पुरुषोत्तमैकवसतिः श्रीसङ्घरत्नाकरः ।
यं संसेव्य घनाघना इव जिना धारालधर्मामृतै-
र्विश्वाश्वासनहेतवः कति न तेऽभूवन् भविष्यन्ति वा ? ॥ १५ ॥

वस्तुपालमाहात्म्यम्

गुर्वाशीर्वचसां फलं निरवधि श्रीसिद्धिसिद्धौषधिः,
कीर्तिस्फूर्तिसुधासुधांशुरुदयद्दीप्रप्रभाभास्करः ।
मूर्तः पुण्यसमुच्चयो विजयते कोऽप्येष सङ्घाधिपः,
शङ्के यस्य विभात्यखण्डविभुतापाखण्डमाखण्डलः ॥ १६ ॥

प्रस्तुतग्रन्थस्याभिधानम्

सङ्घपतिचरितमेतत्, कृतिनः कर्णावतंसतां नयत ।
श्रीवस्तुपालधर्माभ्युदयमहोमहितमाहात्म्यम् ॥ १७ ॥

वस्तुपालवंशवर्णनम्

श्रीमत्प्राग्वाटगोत्रेऽणहिलपुरभुवश्चण्डपस्याङ्गजन्मा,
जज्ञे चण्डप्रसादः सदनमुरुधियामङ्गभूस्तस्य सोमः ।
आसाराजोऽस्य सूनुः किल नयममृतं कालकूटोपभुक्त-
श्रीकश्रीकण्ठकण्ठस्थलमलविपदुच्छेदकं यद्यशोऽभूत् ॥ १८ ॥

सोऽयं कुमारदेवीकुक्षिसरःसरसिजं श्रियः सदनम् ।
श्रीवस्तुपालसचिवोऽजनि तनयस्तस्य जनितनयः ॥ १९ ॥

यस्याग्रजो मल्लदेव, उतथ्य इव वाक्पतेः ।
उपेन्द्र इव चेन्द्रस्य, तेजःपालोऽनुजः पुनः ॥ २० ॥[1]

चौलुक्यचन्द्रलवणप्रसादकुलधवलवीरधवलस्य ।
यो दध्रे राज्यधुरामेकधुरीणं विधाय निजमनुजम् ॥ २१ ॥

---

१ विंशतितमश्लोकानन्तरं पाता० पुस्तकेऽशोनिशङ्कितः श्लोकोऽधिक उपलभ्यते—

यश्चापथस्य पन्थास्तपस्विनां ग्रामशासनोद्धारात् ।
येनापनीय नवकरमनवकरः कारयाञ्चक्रे ॥

पद्यमिदं किल पञ्चदशसर्गान्तर्वर्तीदृश्यते सर्वासु प्रतिषु ॥

[1]अणहिलपाटकनगराऽऽदिराजवनराजकीर्तिकेलिगिरिम् ।
पञ्चासराह्वजिनगृहमुद्दध्रे यः कुलं च निजम् ॥ २२ ॥
विभुता-विक्रम-विद्या-विदग्धता-वित्त-वितरण-विवेकैः ।
यः सप्तभिर्वि-कारैः, कलितोऽपि बभार न विकारम् ॥ २३ ॥

वस्तुपालस्य कुलगुरवः

एतेषां च कुले गुरुः समभवन्नागेन्द्रगच्छश्रिय-
चूडारत्नमयत्नसिद्धमहिमा सूरिर्महेन्द्राभिधः ।
तस्माद् विस्मयनीयचारुचरितः श्रीशान्तिसूरिस्ततो-
ऽप्याऽऽनन्दा-ऽमरसूरियुग्ममुदयच्चन्द्रा-ऽर्कदीप्रद्युति ॥ २४ ॥
श्रीजैनशासनवनीनवनीरवाहः, श्रीमांस्ततोऽप्यघहरो हरिभद्रसूरिः ।
विद्यामदोन्मदगदेष्वनवद्यवैद्यः, ख्यातस्ततो विजयसेनमुनीश्वरोऽयम् ॥ २५ ॥

वस्तुपालस्य जिज्ञासा

कदाचिदेष मन्त्रीशः, कृतप्राभातिकक्रियः । गत्वा पुरो गुरोस्तस्य, नत्वा विज्ञो व्यजिज्ञपत् ॥२६॥
भगवन्नयमेकोऽपि, मर्त्यजन्ममहीरुहः । चतुःप्रकारः किं नाम, प्राणिभेदेन भासते ? ॥२७॥
अवकेशी यदेकेषां, केषाञ्चिद् विषभूरुहः । किम्पाकतरुरन्येषां, परेषां कल्पपादपः ॥२८॥
तदत्र कारणं किञ्चिदभिरूपं निरूप्यताम् । कारणानां हि नानात्वं, कार्यभेदाय जायते ॥२९॥
अथोवाच गुरुः साधु, विज्ञ ! जिज्ञासितं त्वया । हे सकर्ण ! निर्णीतं, सर्वं सर्वविदागमे ॥३०॥
सुकृतं न कृतं किञ्चिद्, यैः प्रमादपरैः पुरा । तेषां त्रिवर्गशून्यानां, दीनानां जन्म निष्फलम् ॥३१॥
तमोमयैः पुनर्बद्धं, पापं पापानुबन्धि यैः । तत् तेषां सौनिकादीनां, परत्रेह च दुःखदम् ॥३२॥
रजस्तमोमयैश्चान्ये, पुण्यं पापानुबन्धि यैः । तत् तेषां म्लेच्छपादीनां, नरकान्तसुखप्रदम् ॥३३॥
पुण्यानुबन्धबन्धूनि, सुकृतानि कृतानि यैः । [2]दत्ते मानुषजन्मैषां, परत्रेह च वाञ्छितम् ॥३४॥
अथाऽऽह मन्त्री पूज्यास्तत्, कथयन्तु यथागमम् । पुण्यानुबन्धबन्धूनां, सुकृतानां निबन्धनम् ॥३५॥
जगद्गुरुरथो मन्त्रिन् !, श्रूयतां तद् यथागमम् । यद् विधातव्यमव्यग्रैर्लोकैर्लोकोत्तरैर्नरैः ॥३६॥
दान-शील-तपो-भावभेदभिन्नं चतुष्टयम् । पुण्यानुबन्धिपुण्यानां, निबन्धनमिदं विदुः ॥३७॥
तत्रापि मुनयः प्राहुर्भावनायाः प्रधानताम् । तयैवानुगृहीतं हि, त्रितयं तत् फलेग्रहि ॥३८॥

राजव्यापारस्य साफल्यम्

पावनी नावनीनाथ !, व्यापारकलुषे हृदि । अस्माकीये वसत्युच्चैर्भावना भगवन्नसौ ॥३९॥
इत्युक्ते मन्त्रिणाऽवोचन्, गुरवो गौरवोचितम् । मन्त्रिन् ! नृपस्य व्यापारः, [3]किमर्थं दूष्यते त्वया ?
॥ ४० ॥ युग्मम् ॥
यदयं तुच्छचित्तानामज्ञानां क्रूरकर्मणाम् । परदार-परद्रोह-परपीडापरात्मनाम् ॥४१॥
तादात्विकसुखास्वादसादरीकृतचेतसाम् । नरकालोकनेऽन्धानां, बधिराणां हितश्रुतौ ॥४२॥

---

1 नास्तीदं पद्यं पाता० पुस्तके ॥　2 दत्ते संता० ॥　3 किमिदं दू० संता० पाता० ॥

जायते क्षुद्रसत्त्वानामयशःपङ्कपातिनाम् । ऐहिकामुष्मिकानर्थसम्बन्धैकनिबन्धनम् ॥४३॥ विशेषकम्॥
ये पुनः पुण्यकर्माणो, महेच्छाः स्वच्छबुद्धयः । परोपकारव्यापारसफलीकृतजीविताः ॥४४॥
गुरूपदेशपीयूषपूरपावितमानसाः[1] । वैभवे च भवे चास्मिन्, भङ्गुरीभावभाविनः ॥४५॥
शुचौ यशसि धर्मे च, स्थैर्यबुद्धिविधायिनः । विनिर्जितारिषड्वर्गाः, स्वयमायतिदर्शिनः ॥४६॥
भवत्यद्भुतसत्त्वानां,तेषां लोकोत्तरात्मनाम् । नृपव्यापार एवायमिहामुत्र च सिद्धये ॥४७॥ कलापकम्॥

## प्रभावना

येन लोकोत्तरः कोऽपि, धर्मस्तीर्थेशदेशितः । स्वर्गापवर्गसाम्राज्यश्रीस्वयंवरमण्डपः ॥ ४८ ॥
सुदुष्करतरः कामं, महासत्त्वेतरैर्नरैः । किमन्यत् ? तीर्थकृल्लक्ष्मीकारणानां शिरोमणिः ॥ ४९ ॥
प्रभावनाभिधः सोऽपि, नृपव्यापारतेजसा । दुरितध्वान्तविध्वंसाद्, भास्वरां श्रयति श्रियम्
॥ ५० ॥ विशेषकम् ॥
क्रमन्ते यत्र नान्यानि, प्रायश्चित्तानि कल्मषे । तत्राप्यनन्यसामान्यमयमेवाघमर्षणम् ॥ ५१ ॥
भावना शिवदा स्वस्य, स्वा-ऽन्ययोस्तु प्रभावना । प्रकारात् तदितः श्रेष्ठा, भावनातः प्रभावना ॥ ५२ ॥
ख्याताश्च यद्यपि स्पष्टमष्टावेव प्रभावकाः । तथाऽप्युपमितप्रोक्ताः, परेऽप्यद्भुतवैभवाः ॥ ५३ ॥
तथाह्यतिशयस्फूर्तिगणभूपतिसम्मताः । प्रभावयन्ति तीर्थेशतीर्थमव्यर्थशक्तयः[2] ॥ ५४ ॥
अङ्गं प्रशस्यमस्याश्च, निर्णीतं परमर्षिभिः । श्रद्धाविशुद्धं विधिवज्जैनयात्राप्रवर्तनम् ॥ ५५ ॥
एतां च त्रिविधामाहुरेकामष्टाह्निकाभिधाम् । द्वितीयां रथयात्रां च, तीर्थयात्रामथापराम् ॥ ५६ ॥
वितन्वन्ति सतामेतास्तिस्रोऽपि श्रायसीं श्रियम् । तथापि तीर्थयात्रेयममेयसुकृतास्पदम् ॥ ५७ ॥
दान-शील-तपो-भाव-प्रभावनसमुद्भवः । पुण्यराशिरशेषोऽपि, यदत्र प्रथते पृथुः ॥ ५८ ॥

## ससङ्घं तीर्थयात्राया विधिः

तीर्थयात्रां चिकीर्षोश्च, यत् कर्तव्यं महात्मनः । यथागमं विधिस्तस्य, क्रमादयमुदीर्यते ॥ ५९ ॥
विवेकी पुरुषस्तत्र, जाति-कर्माद्यदूषितः । नृपावष्टम्भसंरम्भी, नीतिस्फीतधनागमः ॥ ६० ॥
वदान्यो जनतामान्यः, पूज्यपूजापरायणः । जन्म-जीवित-वित्तानां, जिघृक्षुः फलमद्भुतम् ॥ ६१ ॥
तिथौ पुण्यातिथौ गत्वा, गुरुक्रमयुगान्तिके । श्रद्धाशुद्धाशयः पुण्यप्रज्ञो विज्ञपयेदिदम् ॥ ६२ ॥
मर्त्यजन्म-कुलैश्वर्यसामग्रीं प्राप्य दुर्लभाम् । कृतार्थीकर्तुमिच्छामि, भगवँस्तीर्थयात्रया ॥ ६३ ॥
धन्यस्त्वं तीर्थकृत्पूज्यो, यस्य सङ्घः पतिस्तव । सेनाधिपत्यवत् सङ्घाधिपत्यं वितरिष्यति ॥ ६४ ॥
सङ्घाधिपत्यमत्यन्तदुर्लभं भविनां भवे । तीर्थाधिपत्यवद् भद्र !, जगद्भद्रङ्करोदयम् ॥ ६५ ॥
अर्जितोदात्तपुण्यस्य, भाविकल्याणसम्पदः । कस्यापि तीर्थयात्रार्थमियमुत्सहते मतिः ॥ ६६ ॥
एवं संवर्धितोत्साहो, गुरुणा प्रीतचेतसा । यात्रायै कृतसत्कारः, कारयेद् दिननिर्णयम् ॥ ६७ ॥
॥ कलापकम् ॥
साधर्मिकाणां सर्वत्र, बहुमानपुरःसरम् । यात्रार्थं कृतसल्लेखान्, लेखान् सम्प्रेषयेत् ततः ॥ ६८ ॥
रथोदपाहना-ऽऽवास-कोश-पादातसङ्ग्रहः । गुरु-योग्यादिगन्धर्व-शिल्पिवर्गपरिग्रहः ॥ ६९ ॥

1 °षपुण्यपा° संता० ॥ 2 °व्यक्तय° संता० ॥

जलोपकरण-च्छत्र-दीपिकाधारिभिर्वृतः । सूपकृद्धान्य-भैषज्य-भिषक्प्रभृतिसम्भृतः ॥७०॥
चन्दना-ऽगरु-कर्पूर-काश्मीर-वसनादिभिः । वस्तुभिर्मुदितश्चैत्य-तीर्थ-सङ्घार्चनोचितैः ॥७१॥
मुहूर्ते पूर्वनिर्णीते, स्नपयित्वा जगद्गुरुम् । रचयित्वाऽद्भुतां पूजां, निषण्णस्तत्पुरस्ततः ॥७२॥
सङ्घाधिपत्यदीक्षायां, दत्तायां गुरुभिर्मुदा । दिक्पालेभ्यस्ततो दत्त्वा, स्फूर्जन्मन्त्रबलं बलिम् ॥७३॥
पूजिते पुष्प-वासाद्यैर्मन्त्रमुद्राङ्किते रथे । स्वयमारोपयेद् देवं, महेनातिमहीयसा ॥७४॥
॥ षड्भिः कुलकम् ॥
पुरस्कृतगुरुः कृत्वा, ससङ्घश्चैत्यवन्दनम् । कायोत्सर्गैः कपर्द्यम्बाप्रभृतीन् सन्निधापयेत् ॥७५॥
क्षुद्रोपद्रवविद्रा[1]विमन्त्रध्यानामलात्मभिः । चलशान्तःकथचालैश्च, गुरुभिः कृतसन्निधिः ॥७६॥
स्फूर्जज्जयजयध्वान-धवलध्वनिबन्धुरैः । अयार्यैस्तूर्यनिर्घोषैर्नादिताम्बरगह्वरः ॥७७॥
उद्दामदान-सम्मानपूरितार्थिमनोरथः । रम्ये परिसरे पुर्याः, कुर्यात् प्रस्थानमङ्गलम् ॥७८॥ विशेषकम्
ततः साधर्मिकान् सर्वान्, नानास्थानागतानसौ । सत्कृत्य सहितस्तैश्च, कुर्वन्नुर्वीं प्रमोदिनीम् ॥
धनैर्धनार्थिनः कामं, वाहनैर्वाहनार्थिनः । सहायैरसहायांश्च, प्रीणयन् सह्ययात्रिकान् ॥८०॥
बन्दि-गायकमुख्यांश्च, नामग्राहान् महात्मनाम् । अशनैर्वसनैर्द्रव्यैर्यथाशक्ति कृतार्थयन् ॥८१॥
चैत्यानि पूजयन् मार्गे, भग्नानि च समुद्धरन् । तत्कर्मकृत्सु वात्सल्यं, कुर्वंस्तत्कार्यचिन्तनम् ॥८२॥
सत्कुर्वन् धार्मिकान् निःस्वान्, दानाद् दीनान् प्रमोदयन् ।
भीतानामभयं यच्छन्, मोचयन् बन्धनस्थितान् ॥८३॥
पङ्कमग्नं च भग्नं च, सङ्कटे शकटा[2]दिकम् । नियुक्तैरुद्धरंस्तत्तत्कर्मशिल्पकरैर्नरैः ॥८४॥
क्षुधितं तृषितं व्याधिबाधितं श्रमनिस्सहम् । तन्वानः सुस्थमन्ना-ऽम्बु-भिषग्-भैषज्य-वाहनैः ॥८५॥
क्षुन्दानश्चाखिलान् क्षुद्रोपद्रवान् धार्मिके जने । विदधानश्च जैनेन्द्रशासनस्य प्रभावनाम् ॥ ८६ ॥
ब्रह्मचर्य-तपस्तेजोजनितान्तस्तमःशमः । दधद्देव-गुरूपास्तिभावनापावनं मनः ॥ ८७ ॥
क्रमेण प्राप्य तीर्थानि, साधर्मिकसमाधिना । भृत्वा तीर्थाम्भसा कुम्भान्, पुष्प-वासाधिवासितान् ॥
सङ्घं गान्धर्ववर्गं च, चर्चयित्वा यथोचितम् । पुष्प-कुङ्कुम-कर्पूर-चन्दनप्रमुखैस्ततः ॥ ८९ ॥
अत्यद्भुताभिर्देवेन्द्रविमानादिविभूतिभिः । अर्हत्सततीर्थकृज्जन्ममज्जनोत्सववैभवः ॥ ९० ॥
जगत्त्रयपतेः स्नात्रं, कुर्वीत प्रीतमानसः । जगतीजिनबिम्बानां, चैत्याद्बहिःस्थतामपि ॥ ९१ ॥
॥ त्रयोदशभिः कुलकम् ॥
दुग्धाद्यैरमृतैः किञ्च, कर्पूराद्यैश्च पञ्चभिः । ततः पञ्चामृतस्नात्रं, पात्रं कल्याणसम्पदः ॥ ९२ ॥
चन्दनस्यन्द-कस्तूरी-कर्पूरा[3]द्यैर्विलेपनैः । स्वर्णाभरण-पुष्पस्रग्-वसनादिभिरर्चनम् ॥ ९३ ॥
घनसारा-ऽगुरुप्रायसुगन्धद्रव्यधूपनम् । प्रेक्षां दक्षजनप्रेक्ष्यामद्भुतं च महाध्वजम् ॥ ९४ ॥
चलच्चामर-भृङ्गारनीरधारामनोहरम् । कर्पूरारात्रिकं पुष्पवृष्टिसम्बन्धबन्धुरम् ॥ ९५ ॥
देवानां वन्दनं चाथ, कृत्वा कुर्याद् यथोचितम् । देवसेवकसत्कारमनिवारं च भोजनम् ॥
॥ ९६ ॥ पञ्चभिः कुलकम् ॥
मुखोद्घा[4]टविधाने च, मालोद्धट्टनपर्वणि । किञ्चाक्षयनिधिक्षेपे, भूमिभाण्डादिनिष्क्रये ॥ ९७ ॥
कोशं संयर्प्य देवस्य, दीनादीननुकम्प्य च । आपृच्छेनार्चनापूर्वं, प्रभुं गद्गदया गिरा ॥९८॥ युग्मम् ॥

---

१ 'द्रावम' संता० ॥ २ शकटं स्थितम् संता० ॥ ३ 'गन्धिद्र' संता० पाता० ॥ ४ 'द्घाटन' संता० ॥

विश्वसङ्कल्पकल्पद्रो !, त्वदेकमयमानसे । पुनर्दर्शनदानेन, प्रसीद सदयं मयि ॥ ९९ ॥
ततः प्रभुं नमस्कृत्य, सत्कृत्य सह्यात्रिकान् । तीर्थानुध्यानधन्यात्मा, निवृत्तः स्वपुरं गतः ॥ १०० ॥
पुण्यस्फूर्ते मुहूर्तेऽसौ, समुत्सर्पन्महोत्सवम् । रथप्रवेशमाधाय, प्रतिमामानयेद् गृहम् ॥ १०१ ॥
साधर्मिक-सुहृद्बन्धु-पौरधौरेयकांस्ततः । भोजनादिभिरानन्द्य, कुर्यात् सङ्घस्य पूजनम् ॥ १०२ ॥
॥ विशेषकम् ॥

[1]इदमेव महादानं, भाग्ययशोऽयमेव च । इदमेव श्रियो मूलं, यदेतत् सङ्घपूजनम् ॥ १०३ ॥
इति सिद्धान्तसिद्धोऽयं, तीर्थयात्राविधौ विधिः । स्थानैश्चतुर्भिराराद्धैः, सम्यगाराधितो भवेत् ॥१०४॥

तद्यथा—

परोपकारकरणं, प्रशमतनिषेवणम् । यथाशक्ति तपः सम्यग्दीना-[2]ऽनाथानुकम्पनम् ॥ १०५ ॥
स्थानान्येतानि चत्वारि, सङ्घाधिपतिना ततः । आराध्यानीच्छता पुण्यश्रियं पुण्यानुबन्धिनीम् ॥१०६॥

यश्चेतसा शुचितरेण चतुःप्रकारामाराधयत्यभिमतामिति तीर्थयात्राम् ।
प्रीता स्वयंवरविधिं विदधाति तस्मिन्, सौभाग्यभाग्यवति सङ्घपतित्वलक्ष्मीः ॥ १०७ ॥

॥ इति श्रीविजयसेनसूरिशिष्यश्रीउदयप्रभसूरिविरचिते श्रीधर्माभ्युदय-
नाम्नि श्रीसङ्घपतिचरिते लक्ष्म्यङ्के महाकाव्ये तीर्थयात्रा-
विधिवर्णनो नाम प्रथमः सर्गः ॥ छ ॥

यद्वीयान् परिलुप्तदर्शनपथः प्राप्तः परं तानवं,
रोहन्मोहतया तथा हतपरिस्पन्दोऽतिमन्दोद्यमः ।
श्रीमन्त्रीश्वर वस्तुपाल ! भवतो हस्तावलम्बं चिराद्,
धर्मः प्राप्य महीं विहर्तुमधुना धत्ते पुनः पाटवम् ॥ १ ॥ छ ॥

॥ [3]ग्रं० १२१ ॥ छ ॥ छ ॥

१ श्लोकोऽयं खंता० पुस्तके नास्ति ॥ २ °हीनानामनुकं° पाता० ॥ ३ ग्रन्थाग्रं ११६ पाता० ॥

## द्वितीयः सर्गः ।

परोपकारः पुण्यर्द्धिवार्द्धिसंवर्द्धने विधुः । लोकोत्तरस्फुरत्कीर्त्तिवल्लिपल्लवनेऽम्बुदः ॥ १ ॥
भवन्ति हि महात्मानः, परोपकृतिकर्मठाः । अप्रधानीकृतस्वार्थः, सार्थवाहो यथा धनः ॥ २ ॥

तद्यथा—

अस्ति प्रत्यग्विदेहेषु, जन्मभूमिरिव श्रियः । क्षितिप्रतिष्ठितं नाम, पुरं क्ष्माभुकुटोपमम् ॥ ३ ॥
सुरालयचयोत्तुङ्गशृङ्गरङ्गद्ध्वजव्रजैः । दत्तपत्रमिवाभाति, यदमर्त्यपुरं प्रति ॥ ४ ॥
आसीदासीमभूमीशदासीकरणकौतुकी । प्रसन्नचन्द्रः क्ष्माचन्द्रस्तत्र क्षत्रशिरोमणिः ॥ ५ ॥
कालः करालो यस्यासीन्निस्त्रिंशः संहरन्नरीन् । एतस्माद् दुःसहो जज्ञे, प्रतापतपनः पुनः ॥ ६ ॥
पुरे तत्राभवल्लक्ष्मीनिवासभवनं धनः । सार्थवाहो यशोभिश्च, वणिग्भिश्च विगाढदिक् ॥ ७ ॥
चलाचलाऽपि नो लक्ष्मीर्यत्कराम्भोजमत्यजत् । वाताहता पताकेव, देवायतनकेतनम् ॥ ८ ॥
दृष्टे नृणामपूर्वार्थसुन्दरे यस्य मन्दिरे । बभूव शङ्के शङ्केति, किमिदं जगदन्तरम् ? ॥ ९ ॥
क्षीराब्धेरिव ये तस्य, दधिरे दानपात्रताम् । वारिदा इव ते जग्मुर्जगतोऽप्युपजीव्यताम् ॥ १० ॥
स वसन्तपुरं गन्तुं, व्यवहारार्थमन्यदा । यात्रार्थिनः समाह्वातुं, वादयामास डिण्डिमम् ॥ ११ ॥
यस्य यत् पूर्यते नैव, स तद् याचतु हे जनाः ! । इत्युद्घोषणया पूर्णव्योमा सोमाकृतिर्धनः ॥ १२ ॥
अक्षतान् शिरसा बिभ्रन्, मङ्गलध्वनिपूर्वकम् । तस्थौ [1]निवेशितावासः, पुरीपरिसरावनौ ॥ १३ ॥
॥ युग्मम् ॥
अत्रान्तरे समायातं, धर्मघोषमुनीश्वरम् । सत्कृत्य कृत्यविस्रम्भः, किं कार्यमिति सोऽवदत् ॥ १४ ॥
धर्म्यां वाचमथोवाच, वाचंयमशिरोमणिः । त्वया समं समेष्यामो, वसन्तपुरपत्तनम् ॥ १५ ॥
सार्थवाहस्तथेत्युक्त्वा, प्राह सूपकृतः प्रति । अत्राधमीषां सम्पाद्यं, युष्माभिर्नित्यमित्यहो ! ॥ १६ ॥
अत्रान्तरे च केनापि, स्थालं सार्थपतेः पुरः । रसालफलसम्भारसम्भृतं प्राभृतीकृतम् ॥ १७ ॥
अथ सोत्कर्षहर्षार्श्रुर्धन्यंमन्यमना धनः । धर्मघोषमुनिं प्राह, सोत्साहकरकोरकः ॥ १८ ॥
भगवन्ननुगृह्णीत, गृह्णीत फलसञ्चयम् । धन्योऽस्मि कृतकृत्योऽस्मि, भवत्पादाब्जसेवया ॥ १९ ॥
मूर्तिमानिव धर्मोऽथ, धर्मघोषमुनिर्धनम् । भाषते स्म महाभाग !, कल्पनीयमिदं न नः ॥ २० ॥
सिद्धमन्नं जलं प्रासु, फलं निर्बीजतां गतम् । भवेन्मुनीनां कल्प्यं यन्न कृतं न च कारितम् ॥ २१ ॥
वचनं स मुनीशस्य, निशम्य शमितस्पृहम् । अवोचद् विस्मयस्मेरनेत्रलीलोत्पलो धनः ॥ २२ ॥
अहो ! कष्टमहो ! धैर्यमहो ! दुष्करकारिता । एते विदधते यत् तत्रान्ये श्रोतुमपीशते ॥ २३ ॥
अथ प्रतस्थे सार्थेन, समं स रथमास्थितः । उद्दण्डभाण्डसम्भारवाहिभिर्वोढनोर्मिभिः ॥ २४ ॥
समं श्रीधर्मघोषोऽपि, मुनिभिः परिवारितः । प्रचचालितरां रेजे, विक्रैरिव महागजः ॥ २५ ॥

---

१ 'दत्तपत्ता' संता० ॥ २ 'निवसिता' संता० ॥ ३ 'मानय ध' वता० ॥

अधीयैरौक्षकैर्मानुष्यकैरथ्याभिरौष्ट्रकैः । घनश्चचाल वैपुल्यं, त्रिपुलाया विलोपयन् ॥ २६ ॥
घने प्रचलिते कम्पं, भेजे विश्वम्भरा भरात् । विपरीतममुं सर्वाः, सरितः परितः पुनः ॥ २७ ॥
केकिपत्रातपत्रेषु, वहत्सु जलदश्रियम् । दधे तडिल्लतालक्ष्मीं, स्फुरन्ती कुन्तसन्ततिः ॥ २८ ॥
घनवृक्षा सुधावृक्षा, ग्रीष्मेऽपि ग्रस्ततापया । न सार्थः प्रार्थयामास, धारागृहमहोत्सवम् ॥ २९ ॥
स यावदटवीं काञ्चित्, कैश्चित् प्राप प्रयाणकैः । मार्गे एवाभवत् तावत्, कालो मुदिरमेदुरः ॥ ३० ॥
यथा यथा धरापीठे, धारा धाराधरोऽमुचत् । शरानुरसि पान्थानां, मन्मथोऽपि तथा तथा ॥ ३१ ॥
वारिधाराभिराशङ्क्य, शङ्के पङ्कैरलक्ष्यम् । अन्तर्दधे किल द्रष्टुमक्षमः पद्मबान्धवः ॥ ३२ ॥
साचिव्यं स्मरसाम्राज्ये, किमस्य मयि गर्जति ! । इतीवाम्युन्नतिं प्राप्य, पयोदः पिदधे विधुम् ॥ ३३ ॥
खेदविस्फारसत्कारा, दुर्दिनश्यामलद्युतः । पान्थाश्चरन्तः पङ्कान्तर्भेजिरे गूढपादताम् ॥ ३४ ॥
पान्थानां गच्छतामग्रे, प्राणद्रव्योत्तमर्णकैः । नद्यो गतिनिषेधाज्ञारेखा इव कृता घनैः ॥ ३५ ॥
चापमारोप्य पान्थेषु, स्मराज्ञाभङ्गकारिषु । वीराः पयोमुचोऽमुञ्चन्, धारा नाराचदुर्दिनम् ॥ ३६ ॥
दुर्गाहैर्वाहिनीवाहैः, पथिभिः पङ्कसङ्कुलैः । धारासारैरतिस्फारैः, क्रमोऽप्यजनि योजनम् ॥ ३७ ॥
कष्टं दृष्ट्वाऽथ सार्थस्य, ततः सार्थपतिर्धनः । सौस्थ्येनावासितस्तस्थौ, तत्रोच्चैरटवीतटे . ॥ ३८ ॥
स्थिते सार्थपतौ तत्र, जनानां सार्थवासिनाम् । पाथेयानि त्रुटन्ति स्म, कियद्भिरपि वासरैः ॥ ३९ ॥
अथ सार्थस्तपस्वीव, प्रविष्टः कष्टसङ्कटे । कन्द-मूल-फलप्रायैर्वृत्तिं कर्तुं प्रचक्रमे ॥ ४० ॥
सार्थवाहस्तथा स्पष्टमाश्लिष्टश्चिन्तया तया । ईर्ष्ययेव यथा तस्मान्निद्रया विद्रुतं द्रुतम् ॥ ४१ ॥
यामिन्याः पश्चिमे यामे, शुश्रावाथ श्रुतिप्रियम् । असौ परस्परालापं, मन्दुरा-यामपालयोः ॥ ४२ ॥
तावत् परोपकारित्वमस्य लोकस्य दृश्यते । यावद् दुःसमयच्छद्मा, निकषो निकषा नहि ॥ ४३ ॥
यथा यथा पुनः कालः, करालोऽयं विजृम्भते । तथा तथाऽयं नः स्वामी, प्रतिपन्नेऽतिनिश्चलः ॥ ४४ ॥
परितः प्रसरन्त्येताः, पयोदचयवीचयः । प्रतिपन्नार्थशूरस्य, प्रभोरस्य च कीर्तयः ॥ ४५ ॥
संलापमेतयोः श्रुत्वा, सर्वं श्रुतवतांवरः । चित्ते सञ्चिन्तयामास, स चिद्रूपशिरोमणिः ॥ ४६ ॥
ध्रुवमाभ्यामुपालम्भं, लम्भितोऽस्मि स्तुतिच्छलात् । यदीदृशि मया कष्टसङ्कटे पातितो जनः ॥ ४७ ॥
अथ सञ्चिन्तयन् सार्थे, सार्थेशः स सुखा-ऽसुखे । सस्मार धर्मघोषाख्यमुनेर्विमलमानसः ॥ ४८ ॥
अप्रासुकीकृतं धन्याः, पयोऽपि न पिबन्ति ये । कथं तेषां मुनीन्द्राणां, प्राणयात्रा भविष्यति ! ॥ ४९ ॥
अहो ! मे मन्दभाग्यस्य, तथा निश्चेतनं मनः । यथा कयाऽपि साधूनां, नाकारि सहचारिणाम् ॥ ५० ॥
अत्रान्तरे पपाठोच्चैर्महिर्मङ्गलपाठकः । उदयानुगतं भानोः, प्रातःसुप्रातमङ्गलम् ॥ ५१ ॥
रुद्धोऽपि मेघैः सार्थेश !, भवानिव विभाविभुः । अमुं धनञ्जयमुत्साहमुपकारार्थमुद्ययौ ॥ ५२ ॥
अथ प्राभातिकं कृत्यं, विधाय विधिवद् घनः । माणिभद्राभिधं मित्रं, पप्रच्छ जनवत्सलः ॥ ५३ ॥
धर्मघोषः प्रभुः कुत्र, कथं वा मित्र ! वर्तते ! । यदहो ! सुबहोः कालादद्य मे स्मृतिमागतः ॥ ५४ ॥
तेनाथ कथिते तेषामाश्रमे समुपागतः । गुरूंश्च तत्पुरस्तार्थ, स दृष्टो दृष्टवान् मुनीन् ॥ ५५ ॥

१ 'धाय, रेखा' खंभा० ॥ २ 'यशतिस्तत्र, मयि' खंभा० ॥ ३ 'दृष्टम्' खंभा० पाता० ॥
४ 'धर्मीरस्य,' खंभा० ॥ ५ 'तयोः सर्वं, श्रुत्वा श्रुत' खंभा० पाता० ॥ ६ 'यस्य, मुने' खंभा० ॥
७ 'मुधम' पत्त० ॥ ८ 'स, सुख' खंभा० ॥

कायोत्सर्गस्थितान् काँश्चिदितरान् ध्यानबन्धुरान् । स्वाध्यायधन्यानन्याँस्तु, प्रत्युपेक्षापरान् परान् ॥ ५६ ॥
॥ प्रणम्य क्रमादेतान्, धर्म्यकर्मसु कर्मठान् । गुरोः पुरस्तादासीनः, कृताञ्जलिरदोऽवदत् ॥ ५७ ॥
॥ युग्मम् ॥
समायाताः स्थ सार्थेऽस्मिन्, वचनैर्मम निर्ममाः ! । चक्रे मया न चिन्ताऽपि, सन्तापि हृदयं ततः ॥ ५८ ॥
महामोहस्य माहात्म्यात्, तदिदं स्खलितं मम । सर्वं क्षन्तव्यमव्यग्रमतिभिर्मुनिपुङ्गवैः ॥ ५९ ॥
अथो गुरुरभाषिष्ट, कष्टमेतन्मुधैव ते । सार्थाधीश ! किमस्माकं, न हितं विहितं त्वया ? ॥ ६० ॥
संसार इव दुर्लङ्घे, कान्तारेऽस्मिन् महामते ! । भवता दुष्टकर्मभ्यो, दस्युभ्यो रक्षिता वयम् ॥ ६१ ॥
मुनीनामन्न-पानादि, सर्वमेते यथोचितम् । सार्थवाह ! प्रयच्छन्ति, सार्थिकास्ते निरन्तरम् ॥ ६२ ॥
धनोऽप्यूचे गुणमयं, मन्यन्ते गुणिनो जगत् । वसुधा हि सुधाभानोः, सुधाधौतेव भासते ॥ ६३ ॥
तत् कल्पनीयमाहारमिदानीं दित्सुरस्म्यहम् । मुनीन् प्रेषयताऽऽवासं, प्रति सद्यः प्रसद्य मे ॥ ६४ ॥
वर्तमानेन योगेनेत्युक्ते भगवताऽथ सः । प्राप्तः स्वावासमासन्नबोधिः शोधितमानसः ॥ ६५ ॥
गुरोरथ समादेशाद्, गृहायातं मुनिद्वयम् । कल्प्यान्तरस्याभावेन, स स्वभावेन शुद्धधीः ॥ ६६ ॥
श्रद्धया ग्राहयामास, सर्पिरुत्सर्पिवासनः । सङ्ख्यातीतगुणं बोधिबीजं प्राप्येव निर्वृतः ॥ ६७ ॥ युग्मम् ॥
धर्मलाभोऽस्त्विति स्पष्टमिष्टमाशीर्वचो मुनी । दत्त्वा धनाय नम्राय, जग्मतुर्गुरुसन्निधौ ॥ ६८ ॥
अथाह्नायापराह्णेऽपि, धनोऽपूर्णमनोरथः । गुरुपादान्तिकं प्राप, निन्दन्नात्मानमात्मना ॥ ६९ ॥
अथारेभे मुनीन्द्रेण, देशना क्लेशनाशनी । त्वं नात्मनिन्दया दुःखं, महात्मन् ! कर्तुमर्हसि ॥ ७० ॥
स्वार्थीकृतपरार्थेन, चरितेनामुना भवान् । लोकोत्तरश्रियां नूनं, भविष्यति निकेतनम् ॥ ७१ ॥
महात्मनां ह्ययं पन्थाः, क्षुण्णः पुण्यात्मभिर्नृभिः । यत् परप्रीणनं नाम, प्राणैरपि धनैरपि ॥ ७२ ॥
अस्मिन्नर्थे कथं सार्थवाह ! विश्वैकपावन ! । अभयङ्करभूभर्तुर्न श्रुतं चरिताद्भुतम् ? ॥ ७३ ॥

## अभयङ्करनृपचरितम्

यथाऽपरविदेहेषु, विद्यते भुविभूषणम् । विजये पुष्कलावत्यां, नगरी पुण्डरीकिणी ॥ ७४ ॥
तस्यां विश्राणितक्षोणिक्षेमः क्षेमङ्करो नृपः । तस्य चाऽमरसेनेति, बभूव प्राणवल्लभा ॥ ७५ ॥
अर्धरात्रेऽन्यदा देवी, लग्ने सर्वग्रहेक्षिते । चतुर्दशमहास्वप्नसूचिताद्भुतवैभवम् ॥ ७६ ॥
देवपूजा-दया-दान-दीनोद्धारादिदोहदैः । प्रकाशितगुणग्रामं, सुतरत्नमसूत सा ॥ ७७ ॥ युग्मम् ॥
पिता हर्षप्रकर्षेण, कृताद्भुतमहोत्सवः । अभयङ्कर इत्यस्य, समये चाभिधां व्यधात् ॥ ७८ ॥
वर्द्धमानः क्रमात् पर्वशर्वरीरमणोपमाम् । लेभे कुमारः कलयन्, सकलः सकलाः कलाः ॥ ७९ ॥
निद्राविरामे भूपालतनयोऽपश्यदन्यदा । आत्मानं काननस्यान्तः, पश्चिमप्रहरे निशः ॥ ८० ॥
न तत् पुरं न तद् गेहं, न स लोको न सा रसा । अदृष्टपूर्वः सर्वोऽयं, प्रदेशः प्रतिभाति मे ॥ ८१ ॥

---

१ दुर्लङ्घये, का° संता० पाता० ॥ २ सार्थाधीश ! प्रय° संता० ॥ ३ °भिधिम्° संता० पाता० ॥
४ °नोद्धरणदो° संता० ॥ ५ निदि संता० ॥

किमिन्द्रजालं ? किं स्वप्नः ?, किं वाऽयं विभ्रमो मम ? । इत्यनल्पैर्विकल्पौघैस्तस्य दोलायितं मनः ॥ ८२ ॥
॥ युग्मम् ॥

अत्रान्तरे विनीतात्मा, दिव्यरूपधरः पुरः । गिरं शुचिस्मितां कश्चित्, कुमारं प्रत्यभाषत ॥ ८३ ॥
विस्मयं धीर ! मा कार्षीस्त्वं मयाऽपहृतोऽसि यत् । ज्ञाताऽसि तु स्वयं भ्रातरपहारस्य कारणम् ॥ ८४ ॥
इति श्रुत्वा कुमारोऽपि, यावद् वदति किञ्चन । भेजे तावददृश्यत्वं, स दिव्यपुरुषः क्षणात् ॥ ८५ ॥
किमेतदिति तस्याथ, विस्मयस्मितचेतसः । तथैवावस्थितस्याप, क्षणेन क्षणदा क्षयम् ॥ ८६ ॥
अथोत्थाय कुमारोऽसौ, कौतुकोत्तानमानसः । वनं विलोकयामास, हर्षसोत्कर्षलोचनः ॥ ८७ ॥
वनं स मेने सच्छायवृक्षच्छन्नदिगन्तरम् । भयादिव दिवा भानोः, पिण्डीभूय स्थितं तमः ॥ ८८ ।
स्थूलैस्थुलस्तुलैः शैलैस्तनिकाकारनिर्झरैः । स्कन्धावारः स्मरस्येव, जहारास्य वनं मनः ॥ ८९ ॥
तद् वनं सर्वधूमुक्तकुञ्जपुञ्जं विलोकयन् । स मानसं सरोऽपश्यदात्ममानसनिर्मलम् ॥ ९० ॥
कुमारः कनकाम्भोजैर्भूषितं वीक्ष्य तत् सरः । दिग्वधूदर्पणं मेने, सङ्क्रान्तवदनाम्बुजम् ॥ ९१ ॥
अथास्य सरसो नीरे, समीरेरितवारिजे । उचितां शुचितां कृत्वा, बभ्राम विपिने पुनः ॥ ९२ ॥
अथाग्रतो गतो भूपनन्दनो वन्दनोचितम् । दर्शनीयं ददर्शोच्चैर्मठं कञ्चन काञ्चनम् ॥ ९३ ॥
उद्दामविस्मया-ऽऽनन्ददत्तहस्तावलम्बनः । कुमारोऽथ समारोहत्, तस्य प्रथमभूमिकाम् ॥ ९४ ॥
विलोकयन्नयं तस्य, मठस्य रमणीयताम् । क्रमेणोपरि भूमागमाप निष्पापमानसः ॥ ९५ ॥
अथ तत्र स्थितं कञ्चिद्, दिव्याकृतिधरं पुरः । योगपट्टपरीताङ्गमक्षसूत्रपवित्रितम् ॥ ९६ ॥
पश्यन्तमन्तरात्मानं, विनिवारितमारुतम् । असौ योगीन्द्रमद्राक्षीत्, साक्षाद् योगमिवाङ्गिनम् ॥ ९७ ॥
॥ युग्मम् ॥

प्रणम्याग्रे निविष्टेऽस्मिन्, समाधिमवधूय सः । ऊचे मधुमुचं वाचं, वाचंयमचमूपतिः ॥ ९८ ॥
स्वागतं भवतः श्रीमन् !, राजपुत्राऽभयङ्कर ! । मया त्वमत्रानीतोऽसि, विनीत ! हितहेतवे ॥ ९९ ॥
सोऽप्यूचे स्वागतं तात !, त्वयि दृष्टे ममाधुना । यत् पुण्यं जन्मिनां जन्म, दर्शनेन महात्मनाम् ॥ १०० ॥
इत्थं वदत एवास्य, कुमारस्य क्षणादयम् । विधिवद् विदधे ध्यानमानन्दैकमना मुनिः ॥ १०१ ॥
अथाम्बरपथेनैव, भास्वरस्वर्णभाजना । आगान्मर्त्येष्वसम्भाव्या, भव्या रसवती पुरः ॥ १०२ ॥
क्षणाद् योगी राजेन्दुनन्दनं तदनन्तरम् । अतिथिस्त्वं ममाद्यासि, कुमार ! कुरु भोजनम् ॥ १०३ ॥
अथ स्वर्णमयं स्थालं, स्वयमेव पुरोऽभवत् । यथेष्टभोज्यसम्पूर्णमेकैकमुभयोस्तयोः ॥ १०४ ॥
कृतभोजनयोर्जज्ञे, करकः पुरतोऽम्बरे । तेन प्रदत्ताचमनावुभावप्युत्थितौ ततः ॥ १०५ ॥
अथ हुङ्कारमात्रेण, योगिनोऽस्य महात्मनः । यथाऽऽयातं तथा यातं, रसवत्या तया पुनः ॥ १०६ ॥
चन्दना-ऽगुरु-कर्पूरपूरसौरभसम्भृतम् । ताम्बूलमुभयोः पाणौ, कुतोऽप्युपनतं स्वयम् ॥ १०७ ॥
अथो यथोचिते स्थाने, सुखविश्रान्तयोस्तयोः । अयत्नोपनतं वेणु-वीणादिध्वनिबन्धुरम् ॥ १०८ ॥
स्थान-मान-यति-ग्राम-लयत्रयपवित्रितम् । तदा तत्राभवद् दिव्यं, सङ्गीतं प्रीणितश्रुति ॥ १०९ ॥
॥ युग्मम् ॥

इत्थं विनोदसन्दोहैस्तस्यापहृतचेतसः । ययौ निदाघदीर्घोऽपि, निमेष इव वासरः ॥ ११० ॥

---

१ °लस्थलच्छटैः संता०॥ २ °रसस्तीरे, संता०॥

तेजश्छटासटे याते, तदा देशान्तरं हरौ । भ्रान्तैरिभनिभैर्ध्वान्तैर्नभःकाननमानशे ॥ १११ ॥
तमःकञ्चुकमाच्छिद्य, करैरुज्ज्वलयन् मुखम् । निशाकृशाङ्ग्याः प्राणेशो, दूरदेशादुपागमत् ॥ ११२ ॥
अथ पृथ्वीपतेः पुत्रः, पवित्रस्तेन योगिना । जगदेकमहाबाहुर्जगदे मुदितात्मना ॥ ११३ ॥
सन्ति मे शतशो विद्या, निरवद्या नृपात्मज ! । तासामथ यथापात्रं, क्वचित् काश्चिन्नियोजिताः ॥ ११४ ॥
परमद्यापि विद्याऽस्ति, खड्गसिद्धिनिबन्धनम् । ममैका साऽनुरूपस्य, पात्रस्याभावतः स्थिता ॥ ११५ ॥
एतस्याः सिद्धविद्यायाः, स्मरणेन रणे नरः । भवेदपि परोलक्षविपक्षविजयक्षमः ॥ ११६ ॥
यद्यपि प्राप्य यो विद्यां, कयाचिदपि शङ्कया । नियोजयति नान्यत्र, स विद्यावधपातकी ॥ ११७ ॥
तथापि तस्याः सत्पात्रं, प्राप्नोति न यदा नरः । तदा श्रेयस्तमो मन्ये, निराम्नायः किल क्षयः ॥ ११८ ॥
॥ युग्मम् ॥
असङ्क्रामितविद्यस्य, मम स्यादधमर्णता । असत्पात्रे तु विन्यासो, विद्याविप्लवकारणम् ॥ ११९ ॥
आयुश्च स्वल्पमेवैतदितो व्याघ्र इतस्तटी । इति कर्तव्यतामूढमानसो यावदस्म्यहम् ॥ १२० ॥
तावद् विद्येयमागत्य, स्वयमेव पुरो मम । चिन्तां त्वं वत्स ! मा कार्षीरित्यवोचत सादरम् ॥ १२१ ॥
अद्य प्रातर्गुणग्रामरामणीयकमन्दिरम् । समानेष्यामि सत्पात्रभूतं कमपि पूरुषम् ॥ १२२ ॥
त्रैलोक्यमण्डनप्राये, तस्मिन् मां पुरुषाद्भुते । सम्यग् विन्यस्य सन्न्यस्य, शरीरं त्वं सुखी भव ॥ १२३ ॥
अथैतया त्वमानीतः, प्रेषितान्निजचेटकात् । प्रतिपद्यस्व तद् विद्यामित्युक्ते सोऽप्यदोऽवदत् ॥ १२४ ॥
एतावतैव धन्योऽस्मि, दृष्टवान् यत् तव क्रमौ । तद् विद्यया किमद्यापि, कृत्यं सद्विद्य ! विद्यते ? ॥ १२५ ॥
सिद्धिसौधाग्रसोपानं, श्रीवशीकारकारणम् । कल्याणसम्पदादर्शो, दर्शनं हि महात्मनाम् ॥ १२६ ॥
योगीन्द्रोऽप्यब्रवीद् भद्र !, जगद्भद्रङ्करश्रियः । भवन्ति हि भवादृक्षाः, कल्पवृक्षा इव क्षितौ ॥ १२७ ॥
परं तथाऽपि मे विद्यां, गृहाणानुगृहाण माम् । ऋणं गुरोर्मयि च्छिन्दन्नुपकारपरो भव ॥ १२८ ॥
इत्युक्त्वा खड्गसिद्धिं तां, दत्त्वा सत्त्वानुरञ्जितः । योगीन्द्रः प्रापयामास, कुमारं पितुरन्तिके ॥ १२९ ॥
अथाकस्मान्नृपो दृष्ट्वा, तं समायातमात्मजम् । नगरं कारयामास, महोत्सवमयं तदा ॥ १३० ॥
पृथ्वीनाथेन पूर्वेषामथ प्रस्तावसुना पथि । कुमारो राज्यदानार्थमर्थितोऽत्यर्थमब्रवीत् ॥ १३१ ॥
गृह्णामि नाहं साम्राज्यं, तात ! पातकपातकम् । कर्तुमभ्युत्सहे किन्तु, त्वत्सेवामेव केवलम् ॥ १३२ ॥
यातस्तातामतः पद्भ्यां, प्रियाः प्रस्वेदबिन्दवः । न तु मे त्वद्विमुक्तस्य, मौलौ मुक्ताफलस्रजः ॥ १३३ ॥
अनिच्छतोऽप्यथैतस्य, क्षेमङ्करनरेश्वरः । अर्पयामास साम्राज्यमभिषेकपुरःसरम् ॥ १३४ ॥
अथ क्षेमङ्करः क्ष्माभृद्, दक्षो दीक्षामुपाददे । अभयङ्करभूपालः, पालयामास क्षितिम् ॥ १३५ ॥
राज्यभारधुरं बिभ्रन्, न्यायधर्मधुरन्धरः । अयमानन्दयामास, प्रजा इव निजाः प्रजाः ॥ १३६ ॥
तस्य कल्पद्रुमस्येव, सर्वतोऽप्युपकुर्वतः । दिशोऽधिवासयामास, यशःकुसुमसौरभम् ॥ १३७ ॥
अथान्यदाऽस्य भूभर्तुर्धर्मासनमुपेयुषः । सदःसदनमभ्येत्य, प्रतीहारो व्यजिज्ञपत् ॥ १३८ ॥
प्रभो ! पुष्पपुरस्वामी, नृसिंहः सिंहविक्रमः । बहिः स्वल्पपरीवारो, देवपादान् दिदृक्षते ॥ १३९ ॥
अथ भूभर्तुरादेशात्, प्रावेशयदसौ नृपम् । सोऽप्यासन्नासनासीनः, सप्रश्रयमदोऽवदत् ॥ १४० ॥

---

१ °शादथाऽऽगमत् खंता० पाता० ॥ २ वता० पाता० युग्मम् इति नास्ति ॥ ३ °मागत° खंता० पाता० ॥ ४ °पातुकम् पाता० ॥

दुःखधर्मोपतप्तस्य, जगतो जीवनं द्वयम् । पुष्करावर्तमेघो वा, सज्जनो वाऽद्भुतोदयः ॥ १४१ ॥
श्रितोऽस्मि त्वां जगन्मित्रं, तज्जीवितमहीतलम् । विपक्षेण क्षयं नीतः, शीतद्युतिरिवारुणम् ॥ १४२ ॥
तगरानगरीशेन, यतोऽकारणवैरिणा । विगृह्य जगृहे राज्यं, बलिना च्छलिना च मे ॥ १४३ ॥
तत्वङ्गविद्यादानादित्वदवष्टम्भवैभवात् । यथा श्रियं श्रयामि त्वां, पृथ्वीनाथ ! तथा कुरु ॥ १४४ ॥
इति विज्ञापितो राजा, प्रतिश्रुत्य तथैव तत् । प्राहिणोत् प्रतिहारेण, सहितं स्वागताय तम् ॥ १४५ ॥
अथोचे सुमतिर्मन्त्री, स्वच्छ ! स्वच्छन्दचारिता । वारिता नीतिशास्त्रेषु, कथमाद्रियते त्वया ? ॥ १४६ ॥
अस्मै साहाय्यकामाय, सिद्धिर्दातुं न युध्यते । आरामिकः किमारामं, दद्ये पुष्प-फलार्थिनाम् ? ॥ १४७ ॥
चतुरङ्गचमू-देश-कोशप्रभृतिभिः प्रभो ! । स्वगृहाङ्गणमायातं, तत् कृतार्थय पार्थिवम् ॥ १४८ ॥
भूपोऽप्यघत्त मन्त्रीश !, समीचीनमिदं वचः । किन्तु वन्ध्याः कला यासां, न परोपकृतिः फलम् ॥ १४९ ॥
जायन्ते जन्तवः कुक्षिम्भरयो भूरयो न किम् ? । परार्थाः सिद्धयो यस्य, स जातः स च जीवति ॥ १५० ॥
पात्रे हि योजिता विद्या, क्षेत्रे चारोपिता लता । मनोरथपथातीतं, प्रसूते फलमद्भुतम् ॥ १५१ ॥
कामं कलासमृद्धोऽस्तु, सगर्वः शर्वरीचरः । क्षीणोऽपि पूज्यते किन्तु, कलाभिः प्रीणितामरः ॥ १५२ ॥
इति सम्बोध्य मन्त्रीशं, मुहूर्ते शुभशंसिनि । खड्गसिद्धिं ददौ तस्मै, नृसिंहाय महीभुजे ॥ १५३ ॥
कृतसाहायकः सैन्यैरदैन्यैः सिद्धवैभवः । सोऽजैषीत् सङ्गरोत्सङ्गे, तगरानगरीश्वरम् ॥ १५४ ॥
क्षीणशक्तित्रयः सोऽपि, नृसिंहहृतवैभवः । व्यभावयदहो ! दैवं, नैवं मे हृदयेऽप्यभूत् ॥ १५५ ॥
भ्रष्टराज्यद्वयः सोऽहं, दुःस्थावस्थः करोमि किम् ? । अथवा यस्य साहाय्यादनेनौर्जित्यमर्जितम् ॥ १५६ ॥
अभयङ्करभूपालं, तमनुप्रविशाम्यहम् । येन स्याद् वह्निदग्धानां, वह्निरेव महौषधम् ॥ १५७ ॥युग्मम्॥
विपश्चिदिति निश्चित्य, नगरीं पुण्डरीकिणीम् । आगत्य नत्वा भूमीशं, समयज्ञो व्यजिज्ञपत् ॥ १५८ ॥
देव ! त्वमेव नाम्नाऽपि, कर्मणाऽप्यभयङ्करः । नाममात्रेण कीटोऽपि, वर्ण्यते त्विन्द्रगोपकः ॥ १५९ ॥
त्वय्यस्मिन्नर्थिसार्थस्य, फलवन्तो मनोरथाः । तेनैव नररत्नेन, रत्नगर्भेति भूरभूत् ॥ १६० ॥
तदेवं देव ! नावद्यं, विद्यते त्वयि किञ्चन । परं तथापि वाक्चाpल्यात्, त्वमुपालभ्यसे मया ॥ १६१ ॥
अहं हि तगरापुर्यां, नृपतिर्धनवाहनः । हृतराज्यो नृसिंहेन, त्वत्प्रसादोन्मदिष्णुना ॥ १६२ ॥
कुमुदस्य श्रियं हृत्वा, निधत्ते रविरम्बुजे । इन्दुरप्युदयं प्राप्य, कुरुते तद्विपर्ययम् ॥ १६३ ॥
राज्यं तन्मे त्वयाऽऽच्छिद्य, नृसिंहाय प्रयच्छता । आत्मा लोकोत्तरः सम्प्रत्येतयोः सदृशीकृतः ॥ १६४ ॥
॥ युग्मम् ॥
जगदुद्भासिनः सन्तस्तुल्या हि स्वा-ऽन्यपक्षयोः । नामावेशा इवोत्सुका, वाम-दक्षिणनेत्रयोः ॥ १६५ ॥
विश्वोपकर्तुमानानामलक्ष्मीणवुद्धिना । त्वादृशानां घनानां च, विदधे विधिना जनिः ॥ १६६ ॥
राजेन्द्र ! तन्ममापि त्वं, ममत्वं हृदये दधत् । राज्यश्रीभ्रंशसन्तापव्यापदं हर्तुमर्हसि ॥ १६७ ॥
अथ पृथ्वीपतिः प्राह, लज्जावनमिताननः । यन्मे दूरस्थितस्याभूत्, तत् त्वया मृष्यतामिति ॥ १६८ ॥
मदभ्यर्थनया राज्यं, देश-कोश-बलान्वितम् । मामकीनमधिष्ठाय, त्वं सखे ! सुखितो भव ॥ १६९ ॥
उपक्रान्तस्याभिषेकाय, यावदादिशति स्म सः । मन्त्रीशः सुमतिस्तावत्, साक्षेपमिदमब्रवीत् ॥ १७० ॥
वारं वारं विभो ! केयमनालोचितकारिता ? । प्राणैरप्यर्ज्यते राज्यं, यत् तत् त्याज्यं कदाचिद् भवेत् ॥ १७१ ॥

१ °तो जनः सं०। २ °शोऽपि, सगर्वः सं०।

देशैकदेशो देशो वा, पादान्तिकमुपेयुषे । युक्तं यन्नृपपुत्राय, प्रेमपात्राय दीयते ॥ १७२ ॥
सकलं राज्यमुत्सृज्य, गात्रमात्रपरिच्छदः । कथं पत्नीजनस्यापि, स्वाननं दर्शयिष्यसि ? ॥ १७३ ॥
नृपतिस्तावदेवासि, यावल्लक्ष्मीरभङ्गुरा । भङ्गुरायां पुनस्तस्यां, नृपतिर्भवसि क्षणात् ॥ १७४ ॥
उह्यते निधनावस्थो, नरः स्कन्धेन बन्धुभिः । त्यज्यते निर्धनावस्थः, सोदरैरपि दूरतः ॥ १७५ ॥
आश्रितस्य श्रिया पुंसः, स्युर्ये लोकम्पृणा गुणाः । त एव तद्विमुक्तस्य, जगदुद्वेगहेतवः ॥ १७६ ॥
अभ्यधादथ भूमीन्दुस्त्वं लोकोचितमुक्तिवान् । तत्त्वस्पृशा दृशा किन्तु, सचिवोत्तंस ! विवेचय ॥ १७७ ॥
श्रियो वा स्वस्य वा नाशे, येनावश्यं विनश्यते । श्रीसम्बन्धे बुधाः स्थैर्यबुद्धिं बध्नन्तु तत्र किम् ? ॥ १७८ ॥
अहमस्याः पतिः सेयं, ममैवेत्यभिमानिनः । मुधा भोगार्थिनः के वा, वेश्ययेव न वञ्चिताः ? ॥ १७९ ॥
पत्रपात्रीव धात्रीयं, भुक्त्वा त्यक्ता महात्मभिः । विगृह्य गृह्यते लुब्धैः, कुक्कुरैरिव ठक्कुरैः ॥ १८० ॥
यः श्रियं सुकृतक्रीतीं, सुपात्रे नैव निक्षिपेत् । विदुषोऽप्यस्य सोत्कर्षा, कर्षुकादपि मूर्खता ॥ १८१ ॥
वर्धयेद्धान्यबीजं हि, क्षेत्रे निक्षिप्य कर्षुकः । निधाय न पुनर्गेहे, मूलनाशं विनाशयेत् ॥ १८२ ॥
पुंसस्तस्य वटस्येव, विटस्येव च वैभवम् । निःश्वस्य गम्यते यस्मादकृतार्थैः फलार्थिभिः ॥ १८३ ॥
मार्ग्यैरावर्जितैर्लक्ष्मीस्त्यक्ताऽप्यभ्येति वेश्मनि । गृहादपि बहिर्याति, तैरनावर्जितैः पुनः ॥ १८४ ॥
राज्यभूमीरुहो मूलं, श्रीवशीकारकार्मणम् । भाग्यमावर्जयन्तं मां, तन्मन्त्रिन् ! मा निवारय ॥ १८५ ॥
प्रतिबोध्येति मन्त्रीशं, धात्रीशो मेघवाहनम् । भद्रपीठे प्रतिष्ठाप्य, प्रसभादभ्यषिञ्चत ॥ १८६ ॥
तस्मै राज्यश्रियं यच्छन्, धन्यां कन्यामिवात्मनः । देशं कोशं च सैन्यं च, सर्वमूर्वीपतिर्ददौ ॥ १८७ ॥
अभयङ्करदेवस्य, लोकमेकाग्रमानसः । आराद् आराधयामास, सुतवन्मेघवाहनः ॥ १८८ ॥
अथाऽभयङ्करक्ष्मापस्तमापृच्छ्य बलादपि । कृतानुगमनान् पौरा-ऽमात्यादीन् विनिवर्त्य च ॥ १८९ ॥
विहाय वाहनश्रेणिमपि विश्राणितां स्वयम् । सत्पात्रदत्तसर्वस्वमात्मानमनुमोदयन् ॥ १९० ॥
एकोऽप्यद्भुतमाहात्म्यात्, परिवारैरिवावृतः । पाणौ कृपाणं बिभ्राणः, प्रतस्थे तीर्थकौतुकी ॥ १९१ ॥

॥ विशेषकम् ॥

यामिन्यामन्यदा धीमानन्तःकान्तारगह्वरम् । शुश्राव करुणध्वानमध्वानमतिलङ्घयन् ॥ १९२ ॥
ध्वनेस्तस्यानुसारेण, करुणाञ्चितचेतनः । स विवेश विशामीशः, सत्वरं गिरिगह्वरम् ॥ १९३ ॥
तस्मिन् गुरुगुहागर्भव्यापारितविलोचनः । अपश्यन्मण्डलं कुण्डमज्वलज्ज्वलनोज्ज्वलम् ॥ १९४ ॥
तदन्तिकनिषण्णां च, वनितां नवयौवनाम् । शापादिव दिवः स्रस्तां, पुरन्दरपुरश्रियम् ॥ १९५ ॥
जानुयुग्मान्तरन्यस्तव्यस्तालकमुखाम्बुजाम् । भय-शोकातिरेकेण, तनूकृततनुद्युतिम् ॥ १९६ ॥
योगिनोद्यतखड्गेन, वीक्षितां क्रूरचक्षुषा । तनूमिव निशाभर्तुः, सैंहिकेयकटाक्षिताम् ॥ १९७ ॥
करवीरस्रजा रक्तचन्दनेन च चर्चिताम् । असौ विलोकयामास, विलपन्तीमिदं मुहुः ॥ १९८ ॥

॥ कलापकम् ॥

दूरात्मनो मुखादस्य, निषादस्य हठादपि । योऽपकर्षति मां तेन, किमु शून्या जगत्त्रयी ? ॥ १९९ ॥
अहो ! मे मन्दभाग्याया, धर्मः [redacted] भगवानयम् । जगत्त्राणप्रवीणोऽपि, विपरीतो विवर्तते ॥ २०० ॥

१ °क्ष्मीर्मुक्ताऽप्य° पाता० ॥ २ °शो घनवाहनम् संता० ॥ ३ °वद् घनवाहनः संता० ॥

प्रणिपत्य क्रमौ कर्मसाक्षिन्नभ्यर्थये मुहुः । जगच्चक्षुरसि त्राता, तन्मे कश्चिद् विलोकताम् ॥ २०१ ॥
अथ विश्वोपकारैकदीक्षितः क्षितिवल्लभः । निस्त्रिंशं धृतनिस्त्रिंशं, योगीन्द्रमिदमब्रवीत् ॥ २०२ ॥
महात्मन्नद्भुतस्फूर्तिरियं मूर्तिस्तवोर्जिता । साम्राज्यलक्षणैरेतैर्न ब्रूते योगिमात्रताम् ॥ २०३ ॥
इदं लोकद्वयापथ्यं, कर्म धर्मविदांवर ! । न शक्यं वक्तुमप्युच्चैस्तत् किमर्थं त्वयाऽर्थ्यते ? ॥ २०४ ॥
सन्तो ह्यपथपान्थानां, परेषां पथदेशकाः । आत्मनैव कथङ्कारं, प्रथयन्त्यपथे पदं ॥ २०५ ॥
तदस्या ननु योगीन्द्र !, जीवितव्यप्रदानतः । अतिथेर्मे समेतस्य, कर्तुमातिथ्यमर्हसि ॥ २०६ ॥
अथ कन्याशिरोदेशाद्, विनिवर्तितया दृशा । पश्यन् नरेन्द्रं योगीन्द्रः, प्राह साहसिकाग्रणीः ॥ २०७ ॥
जगत्त्रयपवित्रेण, सच्चरित्रेण चामुना । श्रीपुषा वपुषा च त्वं, चक्रवर्तीव लक्ष्यसे ॥ २०८ ॥
तन्ममास्मिन्नकृत्येऽपि, प्रवृत्तेः शृणु कारणम् । विश्वासभाजनं कस्य, भवन्ति न भवादृशाः ? ॥ २०९ ॥
तुङ्गशृङ्गसमूहेन, नभः कवलयन्निव । अस्ति विस्तारविख्यातो, वैताढ्य इति पर्वतः ॥ २१० ॥
तत्राहमुत्तरश्रेणौ, विद्याधरपतेः सुतः । कुलक्रमागतां विद्यामद्भुतामपराजिताम् ॥ २११ ॥
आराधयितुमारेभे, तथा तद्ध्यानमानसः । दिनैर्ष्वपरिपूर्णेषु, साक्षादेषा यथाऽभवत् ॥ २१२ ॥ युग्मम् ॥
अभाषिष्ट च तुष्टाऽस्मि, वत्स ! त्वत्सेवयाऽनया । मदाज्ञया पुनः सेवामुत्तरां कर्तुमर्हसि ॥ २१३ ॥
द्वात्रिंशल्लक्षणां नारीं, नरं वाऽद्भुतविक्रमम् । हुत्वाऽग्निकुण्डे त्वं वत्स !, वरेण्यं वृणुया वरम् ॥ २१४ ॥
अथैतदन्यथाकारं, करिष्यसि वचो मम । स्फुटिष्यति ततस्तूर्णं, मूर्धा तव सहस्रधा ॥ २१५ ॥
अन्तर्हितायां चैतस्यां, तदर्थं पृथिवीमटन् । दृष्ट्वा सिंहपुराधीशसुतामेतामिहानयम् ॥ २१६ ॥
तन्महात्मंस्त्वमेतस्याः, प्राणत्राणपरायणः । सिद्धेर्मम परार्थैकनिभ ! किं यासि विघ्नताम् ? ॥ २१७ ॥
अस्या विवेकिन्नेकस्या, जीवितं ते समीहितम् । भूतधात्रीं परित्रातुर्न पुनर्नृपतेर्मम ॥ २१८ ॥
भुवि ख्यातप्रथो वाचमथोवाच धराधवः । भद्र ! क्षुद्रधियां गच्छस्यध्वन्यध्वन्यतां कुतः ? ॥ २१९ ॥
परेषां पोष्यमात्मानं, सर्वे कुर्वन्ति जन्तवः । जगदप्यात्मनः पोष्यं, कश्चित्तु कुरुते पुमान् ॥ २२० ॥
निर्मथ्य धर्ममत्यर्थमर्थमावर्जयन्ति ये । द्रुमं समूलमुन्मूल्य, फलानि कलयन्ति ते ॥ २२१ ॥
किञ्च दृष्टं श्रुतं वाऽपि, स्त्रीवधाद् देवतार्चनम् ? । तन्मन्ये वञ्चितोऽसि त्वं, छलाद् देवतया तया ॥ २२२ ॥
अथ देव्या वचस्तथ्यं, तथाप्येषा विमुच्यताम् । हुत्वा मदीयं मूर्द्धानं, भव पूर्णमनोरथः ॥ २२३ ॥
एवं च कुर्वता स्वस्य, कन्यायाश्च ननु त्वया । परार्थसिद्धिलुब्धस्य, ममाप्युपकृतं भवेत् ॥ २२४ ॥
गिरं श्रुत्वेति गम्भीराममयङ्करभूभुजः । योगीन्दुरवदद् दन्तद्युतिद्योतितदिङ्मुखः ॥ २२५ ॥
अप्राकृतगुणाधारस्तवाकारोऽयमद्भुतः । प्राह साहसिकप्रज्ञामवज्ञातबृहस्पतिम् ॥ २२६ ॥
सौभाग्य-भाग्ययोर्गेहं, देहं त्वन्यार्थमुत्सृजन् । स्वार्थाद् भ्रष्टोऽसि दूरेण, स्वार्थभ्रंशो हि मूर्खता ॥ २२७ ॥
यदि चात्मव्ययेनैतां, वनितां त्रातुमिच्छसि । ततः सकर्ण ! स्वर्णेन, क्रेतुं रीतिं समीहसे ॥ २२८ ॥
भूपतिः प्राह भो मित्र !, तव स्नेहोचितं वचः । अन्यः कोऽपि पुनः स्वार्थः, परमार्थविदां मतः ॥ २२९ ॥
दानं धनं क्षमा शक्तिरुन्नतिर्गुरुसन्नतिः । स्वार्थः परार्थनिष्पत्तिर्मेने लोकोत्तरैर्नरैः ॥ २३० ॥

---

१ °वोचिता संता० ॥ २ °ण, सुचरि° पाता० । °ण सचरि° संता० ॥ ३ °र्नेषु परि° वता० संता० ॥ ४ °मैनामि° पाता० वता० ॥ ५ °श्रीपरि° संता० ॥ ६ °ज्ञानाद° पाता० ॥

किञ्च प्राण्युपकाराय, प्रायः कायः क्षमो न चेत् । तदनेनाधमर्णेन, पोषितेनाधमेन किम् ? ॥ २३१ ॥
बहुविघ्नः कृतघ्नोऽयं, मुधैव यदि यास्यति । कायः परार्थे पुण्याय, किं न विक्रीयते ततः ?॥ २३२ ॥
दैवस्य वश्यः कायोऽयमवश्यं तेन गृह्यते । यदर्जितं ततः पुण्यमवैगुण्यं तदात्मनः ॥ २३३ ॥
वयस्य ! यदि मे सत्यं, हिताय विहितादरः । तत् पवित्रः कृपाणोऽयं, पाणौ मम समर्प्यताम् ॥ २३४ ॥
विद्याधरकुमारोऽथ, योगिवेषधरोऽब्रवीत् । देव्या वचसि नैवास्ति, महात्मन् ! मम संशयः ॥ २३५ ॥
प्राणान् जगत्त्रयत्राणप्रवीणान् मोक्तुमुत्सुकः । स्त्रीमात्रस्य कृते राजन् !, जाने मूढोऽसि सर्वथा ॥ २३६ ॥
ग्रहिलो महिलात्राणकदाग्रहपरिग्रही । नाहं त्वमिव तद् भूप !, कृपाणं न तवार्पये ॥ २३७ ॥
पृथ्वीनाथोऽप्यभाषिष्ट, सभाशिष्टमिदं वचः । निर्विचारं विचारज्ञ !, त्वद्वचः प्रतिभाति मे ॥ २३८ ॥
क्षत्रियो हि क्षतात् त्राता, प्राप्नोत्यन्वर्थनामताम् । क्षत्रियस्याकृतज्ञत्वेन, मल एवान्यथा भवेत् ॥ २३९ ॥
तदहं युवयोस्त्राणकृते कायममुं त्यजन् । अर्जयँश्च यशोदेहं, शाश्वतं ग्रहिलः कथम् ? ॥ २४० ॥
अनिच्छतोऽप्यथैतस्य, करादाच्छिद्य भूपतिः । अन्तकभ्रुकुटीभीमं, खड्गमव्यग्रमग्रहीत् ॥ २४१ ॥
उपकारिणमासाद्य, खड्गं स्नेहस्पृशा दृशा । वीक्षाञ्चक्रे सुधावर्षैः, स नृपः स्नपयन्निव ॥ २४२ ॥
अथ निस्त्रिंशदुर्दर्शः, स्मेरवृद्दनपङ्कजः । भीषणो रमणीयश्च, तदा राजा रराज सः ॥ २४३ ॥
अथ व्यापारयामास, कृपाणं पाणिना नृपः । सादरं मुदितो मौलिकमले कमलेक्षणः ॥ २४४ ॥
दरिद्र इव सम्प्राप्य, परमान्नं सुदुर्लभम् । मुमुदे स तदा स्कन्धे, लब्ध्वा खड्गस्य सङ्गमम् ॥ २४५ ॥
रोमाङ्कुरभरैरूर्ध्वमुद्धुरैः स तदा बभौ । अभ्युत्थानार्थमत्यर्थं, खड्गायेव समुत्थितैः ॥ २४६ ॥
अथाकस्माद् द्विपच्छेददक्षिणोऽपि न दक्षिणः । बाहुर्बभूव भूभर्तुः, खड्गव्यापारणक्षमः ॥ २४७ ॥
बाहुस्तम्भेन तेनोच्चैरन्तःसन्तापवान् नृपः । मन्त्राक्षिप्तमहापन्नः, पन्नगेन्द्र इवाभवत् ॥ २४८ ॥
अथ यावदयं धीरः, कृपाणं वामपाणिना । अग्रहीत् साहसोत्साहधुरीणो धरणीधरः ॥ २४९ ॥
घर्षणोत्थाग्निदुर्द्धर्षे, कण्ठे दम्भोलिसन्निभे । भेजेऽसिः कुण्ठतां तावन्मदनेनेव निर्मितः ॥ २५० ॥
॥ युग्मम् ॥
अथ यावच्छिरश्छेत्तुं, स्वेन स्वमयमक्षमः । तदर्थं प्रार्थयामास, योगिनं जगतीपतिः ॥ २५१ ॥
जीर्णमूलद्रुवत् तावद्, वातेन क्रूरकर्मणा । शठात्मा स महीपीठे, योगीन्द्रः पुरतोऽपतत् ॥ २५२ ॥
॥ युग्मम् ॥
पृथ्वीनाथोऽप्यथाकस्मात्, किञ्चिन्मूर्च्छितचेतनः । अशृणोद् दिव्यनारीणां, हाहाकारं नभस्तले ॥२५३॥
लब्धसंज्ञश्च वर्षन्तीं, पीयूषं स्वकमण्डलोः । स्फारतारोत्करेणेव, मुक्ताहारेण हारिणीम् ॥ २५४ ॥
चन्द्रोज्ज्वलमुखीं स्वच्छचन्दनसन्दसुन्दराम् । सेवागताभिः स्वःस्त्रीभिश्चकोरीभिरिवावृताम् ॥ २५५ ॥
नेत्रनीलोत्पलानन्दमन्दिरं सुन्दराकृतिम् । ददर्श पुरतो देवीं, ज्योत्स्नामिव शरीरिणीम् ॥ २५६ ॥
॥ विशेषकम् ॥
अथो जगाद सा देवी, सैवाहमपराजिता । वत्स ! त्वत्साहसेनाऽऽशु, तुष्टाऽस्मि वृणु वाञ्छितम् ॥२५७॥
अथ प्रणम्य तां राजा, रम्यतामधिकं दधत् । जगाद देवि ! मे श्रेयस्तरुरद्य फलेग्रहिः ॥ २५८ ॥
यतस्त्वं मम तुष्टाऽसि, शिरश्छेदार्थमर्थिनः । तदिदं प्रार्थये मातः !, प्रसादः क्रियतां मयि ॥२५९॥

१ °न, मम स्यादधमर्णता खंता० ॥ २ °भरै रूर्द्ध्वमुद्धु° पाता० ॥ ३ °न्दिरं सु° खंता० ॥

वाहुस्तम्भे तथा स्तम्भं, निशुम्भय भयापहे । शिरश्छेत्तुमलम्पूष्णुर्यथाऽयं जायते क्षणात् ॥ २६० ॥
एवं प्रतिज्ञानिर्वाहव्रतरक्षणतो मम । उपकारो महान् देवि !, भवेदेव न संशयः ॥ २६१ ॥
मम कार्यं न राज्येन, न धनैर्न वधूजनैः । यदि तुष्टाऽसि सत्येन, तदिदं क्रियतां त्वया ॥ २६२ ॥
नैवं चेत् कर्तुमुत्साहो, मत्साहसवशादय । योगिनोऽस्य ततः स्पष्टमिष्टसिद्धिर्विधीयताम् ॥ २६३ ॥
अथ देवी पुनः प्राह, नाहमस्य दुरात्मनः । प्राणानपि प्रयच्छामि, दूरेऽभीष्टार्थसाधनम् ॥ २६४ ॥
अयं हि जगतीनाथ !, स्त्रीवधारम्भपातकी । भवादृशां वधादात्मसिद्धिं दुष्टः समीहते ॥ २६५ ॥
एतस्य सत्त्वपर्यन्तपरीक्षार्थं मया पुरा । अकृत्यमिदमादिष्टमपूर्णे पूर्वकर्मणि ॥ २६६ ॥
वत्स ! तत् सर्वमुत्सृज्य, मन्त्रानुष्ठानमुत्तमम् । वञ्चितोऽयं मया लोभाविष्कृतं कर्म निर्ममे ॥ २६७ ॥
अभीरोरस्य पापेषु, लोकद्वयविरोधिनः । हीनसत्त्वस्य तत्त्वज्ञ !, कुतः सिद्धिर्भवेत्वसौ ! ॥ २६८ ॥
पुंसः पद्माकरस्येव, क्षीणसत्त्वाम्बुजस्थितेः । श्रीरियं कथमायातु, भ्रमरीव चलाचला ! ॥ २६९ ॥
दुरात्मनस्तदेतस्य, हेलये त्वं महीपते ! । रत्नगर्भामिमामात्मशून्यां नो कर्तुमर्हसि ॥ २७० ॥
अथापि क्रियतामेवं, परोपकृतिकर्मठ ! । यदि स्यादुपकारोऽस्य, कश्चिद् दुश्चरिताम्बुधेः ॥ २७१ ॥
निवृत्तायामथैतस्यां, रेजे भूपतिभारती । सत्क्रियानन्तरं कान्ता, सात्त्विकस्याऽऽयतिर्यथा ॥ २७२ ॥
यदेव देवि ! साध्येऽर्थे, निषेधाय त्वयोच्यते । तदेव प्रस्तुतात्यर्थं, प्रवृत्तिं प्रति कारणम् ॥ २७३ ॥
ततस्त्वं मां शिरश्छेदप्रतिज्ञापूरणोद्यतम् । निवारयन्ती तुष्टाऽपि, कथं रुष्टाऽसि तत्त्वतः ॥ २७४ ॥
प्रसादसादरं मातः !, प्रतिज्ञातार्थवारणात् । निम्नत्या मे यशोदेहं, किं ते सम्प्रति साम्प्रतम् ? ॥ २७५ ॥
यदि भग्नप्रतिज्ञोऽपि, जीवलोकेऽत्र जीवति । वद तद्देवि ! को नाम, मृत इत्यभिधीयताम् ? ॥ २७६ ॥
ततस्त्वं यदि तुष्टाऽसि, तत् प्रयाहि यथाऽऽगतम् । शिरश्छेदाक्षमोऽप्येष, विशाम्यग्नौ यथा स्वयम् ॥२७७॥
इत्युक्त्वैव समुत्तस्थौ, झम्पार्थं स विभावसौ । नहि सत्त्ववतां किञ्चिदशक्यं प्रतिभासते ॥ २७८ ॥
दृष्ट्वा सिंहपुराधीशसुताऽप्येतं तथोद्यतम् । अन्तःसञ्जातसङ्कष्टा, पृथिव्यामपतत् तदा ॥ २७९ ॥
बलादथ समाकृष्य, रभसादपराजिता । भाषते स्म मुदा स्मेरवदना मेदिनीपतिम् ॥ २८० ॥
साहसं वत्स ! मा कार्षीरहं तुष्टाऽस्मि सर्वथा । तवोपरोधात् पद्मायं, जीवितं लम्भितोऽधमः ॥ २८१ ॥
इत्युक्त्वा योगिनस्तस्य, जीवितव्यमिवाक्षवत् । शवमाये शरीरेऽन्तश्चिक्षेपाम्भः कमण्डलोः ॥ २८२ ॥
कुमारीमपि तामेवमभिषिच्याऽपराजिता । स्वयमुज्जीवयामास, घनलेखालतामिव ॥ २८३ ॥
अथ जीवन्तमालोक्य, कुमारी धरणीधवम् । विमर्श-विस्मयस्मेरा, मुमुदे कुमुदेक्षणा ॥ २८४ ॥
अन्तश्चित्तं प्रविष्टोऽथ, तदा तस्या रतेरिव । लोकोत्तरगुणः सोऽयं, पतिः सङ्कल्पजोऽभवत् ॥ २८५ ॥
तदा दध्रे धराधीशमनोऽपहरणार्थिनः । तस्या विलोकितं साचि, साचिव्यं चित्तजन्मनः ॥ २८६ ॥
अवोचत पुनर्देवी, नरेन्द्रमपराजिता । तवोपरोधात् तुष्टाऽहं, महात्मन्नस्य योगिनः ॥ २८७ ॥
सत्त्वरत्नाम्बुधेरस्य, दर्शनायैव लालसः । कर्मसाक्षी तदाऽऽरोहत्, प्राचीनाचलचूलिकाम् ॥ २८८ ॥
अत्रान्तरेऽभवद् भूरिनिःस्वानस्वनमांसलः । दिक्कुक्षिम्भरिरत्युच्चैः, कोऽपि कोलाहलो महान् ॥ २८९ ॥
ददर्शास्यानुसारेण, चक्षुर्दिक्षु क्षिपन्नयम् । क्षोणिनाथः क्षणेनाथ, पृतनां कृतिनांवरः ॥ २९० ॥
किमेतदिति विस्मेरविलोचनमथो नृपम् । सैन्यादस्मादुपागत्य, कश्चिन्नत्वा व्यजिज्ञपत् ॥ २९१ ॥

१ °वत्स्यसौ बता० ॥ २ °ष्टोऽयं, त° संता० ॥

अस्मद्भर्तुरिदं सैन्यमरिकेशरिभूभुजः । स्वामिशून्यं प्रभावस्मिन्नपुत्रे त्रिदिवं गते ॥ २९२ ॥
आराध्य विधिवद् गोत्रदेवतामपराजिताम् । ततस्तदुपदेशेन, भवन्तमुपतिष्ठते ॥ २९३ ॥ युग्मम् ॥
राज्यश्रियस्तदेतस्या, भव त्वं वल्लभो विभो ! । रम्याऽपि हि श्रियं धत्ते, न विनेन्दुं कुमुद्वती ॥ २९४ ॥
प्रज्ञालोकाभिधानस्य, मन्त्रिणः क्रमिकस्य मे । अभ्यर्थनामिमां नाथ !, नान्यथा कर्तुमर्हसि ॥ २९५ ॥
अथो निकटवर्तिन्या, स्वयं देवतया तया । अभ्यषिच्यत राजेन्दुर्निवेश्य कनकासने ॥ २९६ ॥
तस्योत्तमाङ्गे शुशुभे, सितमातपवारणम् । पूर्वक्षोणिभृतः शृङ्गे, सितांशोरिव मण्डलम् ॥ २९७ ॥
कुमारीमपि तामस्मै, मङ्गलस्नानपूर्वकम् । दत्त्वा देवी क्षितीशाय, क्षणेनाथ तिरोदधे ॥ २९८ ॥
अथाऽरिकेशरिक्ष्मापपुरं लक्ष्मीपुराभिधम् । तया वनितया साकं, प्रविवेश विशांपतिः ॥ २९९ ॥
तल्लक्ष्मीपुरसाम्राज्यमभ्युपेत्याऽभयङ्करः । पाथोद इव पाथोधिपाथः पृथ्वीमतर्पयत् ॥ ३०० ॥
ततः सिंहपुराधीशः, स्वयमेत्य प्रमोदवान् । तामनङ्गवतीं पुत्रीं, भूभुजा पर्यणीनयत् ॥ ३०१ ॥
भूचराः खेचराश्चान्ये, कन्यादिभिरुपायनैः । भक्तिपह्वीभवच्चित्तास्तं भूभुजमपूपुजन् ॥ ३०२ ॥
विद्याधरेश्वरः सोऽपि, देवतादत्तवैभवः । सोऽपि पुष्पपुराधीशः, स चापि घनवाहनः ॥ ३०३ ॥
नृपं परेऽपि सामन्ताः, समन्तादेत्य सम्मदात् । रत्न-वाजि-गजप्रायैः, प्राभृतैरुपतस्थिरे ॥ ३०४ ॥
॥ युग्मम् ॥

अन्यदा वन्यदावाभिमतापस्यास्य भूभुजः । चक्रमायुधशालायामाविरासीत् सुदुःसहम् ॥ ३०५ ॥
चक्रस्यास्य प्रभावेण, द्विगुणीकृततेजसा । अभयङ्करभूपेन, षट्खण्डा साधिता मही ॥ ३०६ ॥
न नाम भूभृतामेव, सार्वभौमपदं नृपः । महात्मनामपि प्राप, गुणैर्लोकोत्तरैरयम् ॥ ३०७ ॥
अथ क्रमेण सम्प्राप्य, व्रतसाम्राज्यसम्पदम् । पदं लोकोत्तरं लब्धा, चक्रवर्त्यभयङ्करः ॥ ३०८ ॥
सार्थवाह ! श्रियो मूलमालवालं यशस्तरोः । व्रतं परोपकाराख्यं, मुनयस्तदिदं विदुः ॥ ३०९ ॥
न शोच्यस्तत् त्वयाऽऽत्मा, पाप इत्यमलाशय ! । उपकारपरा बुद्धिः, शुद्धां सूते तवायतिम् ॥ ३१० ॥
उपयोगः परं कश्चिद्, यन्नास्मत्तोऽभवत् तव । सार्थवाह ! क्रियाहीनं, तन्मनोऽतिदुनोति नः ॥ ३११ ॥
तन्महात्मँस्तवात्यर्थं, सर्वथाऽप्युपकुर्वतः । तत्त्वोपदेशमात्रेण, वयमप्युपकुर्महे ॥ ३१२ ॥
संसारे जन्तवः सन्ति, मिथ्यात्वमयनिद्रया । हिता-ऽहितमजानन्तो, जीवन्तोऽपि मृता इव ॥ ३१३ ॥
मिथ्यात्वतटिनीपूरप्लावितः सर्वथा जनः । रयाद्दुस्तरसंसारपारावारे पतत्ययम् ॥ ३१४ ॥
तन्मिथ्यात्वमयं ध्वान्तं, सद्गतिस्खलनक्षमम् । जिघांसता जनेनोच्चैः, सेव्यः सम्यक्त्वभास्करः ॥ ३१५ ॥
स्मेरं सम्यक्त्वसूर्येण, निगूढगुणगौरवम् । उत्तंसयति मुक्तिश्रीरजस्रं पद्मवज्जनम् ॥ ३१६ ॥
सम्यक्त्वकौमुदीस्वादचकोराणां शरीरिणाम् । पुरोवर्तिनि मिथ्यात्वविषे दृष्टिर्विरज्यते ॥ ३१७ ॥
रागादिविजयी देवः, सच्चरित्रगुरुर्गुरुः । प्राणित्राणप्रधानश्च, धर्मः सम्यक्त्वमुच्यते ॥ ३१८ ॥
तत् तवायमलङ्कारो, युज्यते पुरुषोत्तम ! । आधातुं हृदये श्रीमत्सम्यक्त्वं कौस्तुभः शुभः ॥ ३१९ ॥
ऊचे धनोऽथ भगवन् !, प्रतिपन्नमिदं मया । नहि श्रियं समायान्तीं, पदेन प्रेरयेद् बुधः ॥ ३२० ॥
गुरूनथ नमस्कृत्य, प्रीतः सम्यक्त्वसम्पदा । तां क्षपां क्षपयामास, निजावासं गतो धनः ॥ ३२१ ॥

१ 'मायमाभू' पाता० ॥

प्रगेऽथ माणिभद्रेण, विज्ञप्तः सुहृदा धनः । इयं प्रावृडतिक्रान्ता, निशेवोद्भासिभास्करा ॥ ३२२ ॥
विमुक्तं धनुरिन्द्रेण, गृहीतं वसुधाधिपैः । नभस्त्यक्तं घनैः श्लिष्टं, जिगीषुवलधूलिभिः ॥ ३२३ ॥
कालेऽत्र प्रसरन्त्युच्चैर्व्यवसायिमनोरथाः । प्रभो ! प्रतिदिशं प्रौढाः, सहस्रांशोरिवांशवः ॥ ३२४ ॥
एतदाकर्ण्य सार्थेशः, समुलङ्घ्याटवीमिमाम् । गुरूणां गौरवं कुर्वन्, वसन्तपुरमाययौ ॥ ३२५ ॥
तत्र भूपतिसत्कारद्विगुणोत्साहितो धनः । विक्रीय स्वीयभाण्डानि, प्रतिभाण्डान्युपाददे ॥ ३२६ ॥
तत्र स्थितमथापृच्छ्य, धर्मघोषमुनीश्वरम् । क्षितिप्रतिष्ठितं प्राप, कृतार्थः सार्थपः पुरम् ॥ ३२७ ॥
अथ कालेन पूर्णायुरुत्तरेषु कुरुष्वयम् । कल्पद्रुपूर्णसङ्कल्पो, जगिवान् युग्मधर्मताम् ॥ ३२८ ॥
ततश्च प्रथमे कल्पे, भूत्वाऽसौ भासुरः सुरः । अपरेषु विदेहेषु, विजये गन्धिलाभिधे ॥ ३२९ ॥
वैताढ्यशैले गन्धारदेशे गन्धसमृद्धके । पुरे शतबलक्ष्माभृत्पुत्रो विद्याधरान्वये ॥ ३३० ॥
चन्द्रकान्ताङ्गसम्भूतो, जज्ञे नाम्ना महाबलः । अज्ञावगणितानङ्गः, शृङ्गार इव मूर्तिमान् ॥ ३३१ ॥
॥ विशेषकम् ॥

राज्यं महाबलायाथ, दत्त्वा शतबलो नृपः । दीक्षां गृहीत्वा कृत्वा च, तपांसि दिवमासदत् ॥ ३३२ ॥
अथो महाबलः क्ष्माभृद्, यौवनोन्माददुर्धरः । अज्ञातधर्मा कर्माणि, निर्ममे स यथारुचि ॥ ३३३ ॥
महाबलमहीपालमन्यदा सदसि स्थितम् । निर्भरस्फीतसङ्गीतरसनिर्मग्नमानसम् ॥ ३३४ ॥
मन्त्रीशो धर्मतत्त्वज्ञः, स्वयम्बुद्धोऽभिधानतः । वैराग्यवासनाविष्टमभाषिष्ट विशिष्टधीः ॥ ३३५ ॥ युग्मम् ॥
अस्तु स्वादुफलश्रीकः, कदलीद्रुरिवैकदा । विनैकं पुण्यबीजं तु, जन्तुरुच्छेदमृच्छति ॥ ३३६ ॥
तत् तवापि श्रियां मूलं, त्यक्त्वा धर्मं कुलप्रभो ! । इत्थं न विषयग्रामो, मोक्तुं तत्त्वज्ञ ! युज्यते ॥ ३३७ ॥
अभ्यधाद् भूपतिर्मन्त्रिन् !, किमप्रस्तुतमुच्यते ? ।
उवाच सचिवः स्वामिन् !, श्रूयतामत्र कारणम् ॥ ॥ ३३८ ॥
शुचिभिः सचिवैः स्वामिन् !, कुशलोदर्ककर्कशम् । अप्रस्तुतमपि प्रायो, हितं वाच्यं हितैषिभिः ॥ ३३९ ॥
यदद्य नन्दनोद्याने, ज्ञानातिशयशालिनौ । भवदायुर्मया पृष्टौ, चारणौ वाचमूचतुः ॥ ३४० ॥
मासमात्रं भवद्भर्तुरायुः शेषमिति प्रभो ! । विज्ञ ! विज्ञप्यसे बाढमतस्त्वमिति मा मुहः ॥ ३४१ ॥
ऊचे महाबलः साधु, साधुबुद्धिबृहस्पते ! । स्वयम्बुद्ध ! गुरुस्त्वं मे, त्वं मन्त्री त्वं च बान्धवः ॥ ३४२ ॥
यदित्थं पातकाम्भोधिपातुकं प्रति सम्प्रति । मामन्यमिव निर्बन्धाद्, भुजालम्बं प्रयच्छसि ॥ ३४३ ॥
परं समीपमापन्ने, मृत्यौ कृत्यं करोमि किम् ? । मूर्ध्नि दत्तपदे शत्रौ, विक्रमः क्रमतां कुतः ? ॥ ३४४ ॥
प्रव्रज्यां दिनमप्येकं, प्राप्यानन्यमना जनः । मोक्षं यदपि नाप्नोति, कामं वैमानिको भवेत् ॥ ३४५ ॥
इत्यमात्योपदेशेन, महाबलमहीपतिः । जग्राह दीक्षामाचार्यसमीपमुपजग्मिवान् ॥ ३४६ ॥ युग्मम् ॥
असावनशनं कृत्वा, दिनैर्द्वाविंशतिं ततः । ईशानकल्पे देवोऽभूद्, विमाने श्रीप्रभाभिधे ॥ ३४७ ॥
नाम्नाऽयं ललिताङ्गस्य, तत्र वैषयिकं सुखम् । भुञ्जानस्यान्यदाऽच्योष्ट, प्रिया तस्य स्वयम्प्रभा ॥ ३४८ ॥
[illegible] प्रिये ! देहि मे वाचं, प्रलपन्नित्ययोदितः । स्वसामानिकदेवेन, सौहार्दाद् दृढधर्मणा ॥ ३४९ ॥
यः पुरा मित्र ! मन्त्रीशः, स्वयम्बुद्धस्त्वाभवत् । सोऽहं तव वियोगेन, प्रव्रज्यैनां श्रितः श्रियम् ॥ ३५० ॥

१ °प्यसौ संता० पाता० ॥ २ °स्फीतिस° वता० ॥ ३ °भिधः° पाता० संता० ॥
४ दिनान् द्वा° संतासं० ॥ ५ दृढधर्मणा संता० पाता० ॥

अहं त्वयि ततः स्नेहाद्, विज्ञायावधिनाऽधुना। पुनः स्वयम्प्रभामन्यां, भाविनीं कथयामि ते ॥३५१॥
बभूव धातकीखण्डप्राग्विदेहैकमण्डने। नागिलाख्यो गृहपतिर्नन्दिग्रामेऽतिदुर्गतः ॥ ३५२ ॥
तस्य नागश्रियां पत्न्यां, पुत्रीषट्कादनन्तरम्। सुताऽभून्मर्त्यलोकेऽपि, नरकक्ष्मेव सप्तमी ॥ ३५३ ॥
एतस्यां जातमात्रायाममात्रोद्विग्नमानसः। नगरान्निरगाद् दूरं, विरागान्नागिलः किल ॥ ३५४ ॥
दुर्भगत्वेन पुत्र्यास्तु, नाम्नोऽप्यकरणादथ। निर्नामिकेत्यभूत् तस्याः, प्रसिद्धिर्जनिता जनैः ॥ ३५५ ॥
सा वर्द्धिष्णुः क्रमेणाथ, समं दारिद्र्यकर्मणा। अगमद् दारुभारार्थं, नभस्तिलकपर्वते ॥ ३५६ ॥
युगन्धरमुनिं तत्र, सुरा-ऽसुरनमस्कृतम्। दृष्ट्वा नत्वाऽथ तद्व्याख्यां, श्रुत्वा संवेगतो जगौ ॥ ३५७ ॥

दुःखिनः सन्ति भूयांसो, भवेऽस्मिन् भगवन्! जनाः।
मत्तस्तु मन्दभाग्यायाः, कोऽपि दुःखाधिकोऽस्ति किम्? ॥ ३५८ ॥

अथो युगन्धरः प्राह, केवलज्ञानभास्करः। वत्से! धत्से मुधा दुःखाद्वैतवैतण्डिकं मनः ॥ ३५९ ॥
दुःखानि परतः सन्तु, तावन्नरकवासिनाम्। श्रुतमात्राणि भिन्दन्ति, हृदयं यानि देहिनाम् ॥ ३६० ॥
परं प्रत्यक्षमेवैते, वनेऽपि सुखमानिनः। विनाऽपराधं वध्यन्ते, पशवः पश्य पापिभिः ॥ ३६१ ॥
दृढं कशाभिस्ताड्यन्ते, कर्कशाभिस्तुरङ्गमाः। बध्यन्ते चाद्भुतप्राणबन्धुरा अपि सिन्धुराः ॥ ३६२ ॥
परद्रव्य-परद्रोहपराः पश्य नरा नृपैः। क्रन्दन्तः करुणं मारैर्निहन्यन्ते नवैर्नवैः ॥ ३६३ ॥
स्वस्वामिभावसम्बन्धसुर्दुरैर्ममदाहिभिः। वत्से! स्वर्गेऽपि ताप्यन्ते, मरुतोऽविरतोत्सवाः ॥ ३६४ ॥
विलोक्यते न तल्लोके, प्रदेशो निरुपप्लवः। आराध्यते न चेदेष, धर्मः शर्मनिबन्धनम् ॥ ३६५ ॥
संसारदुःखसम्मर्दकर्दमे पततामयम्। धर्म एव भुजालम्बं, दत्ते नान्यः शरीरिणाम् ॥ ३६६ ॥
आराद्धश्च विराद्धश्च, चक्रवर्तीव देहिनाम्। धर्मस्तुष्टश्च रुष्टश्च, सुखं दुःखं च यच्छति ॥ ३६७ ॥
सुखाय वत्से! तद् वाञ्छा, यदि ते विद्यते हृदि। आराध्यतां ततो धर्मः, कल्पनाकल्पपादपः॥ ३६८ ॥
उपदेशमिति श्रुत्वा, मुनेस्त्रैलोक्यदर्शिनः। अनुज्ञां चास्य सम्प्राप्य, दुःखौघक्षयकाङ्क्षया ॥ ३६९ ॥
उद्विग्ना निजदेहेऽपि, गृहीतानशनाऽधुना। वर्ततेऽस्यास्ततो गत्वा, स्वं रूपं दर्शय स्वयम् ॥ ३७० ॥
॥ युग्मम् ॥

तथाकृतेऽथ तेनैषा, तस्मिन्नेवानुरागिणी। मृत्वा तस्याऽभवद् देवी, प्रेमपात्रं स्वयम्प्रभा ॥ ३७१ ॥
भोगान् भुक्त्वा तया साकं, साकम्पोऽथ दिवश्च्युतः। क्षेत्रे महाविदेहेऽभूल्लोहार्गलपुरप्रभोः ॥ ३७२ ॥
सुतः सुवर्णजङ्घस्य, प्रतापजितभास्वतः। स लक्ष्मीकुक्षिमाणिक्यं, वज्रजङ्घ इति श्रुतः ॥ ३७३ ॥
॥ युग्मम् ॥

नगर्यां पुण्डरीकिण्यां, च्युत्वा साऽपि स्वयम्प्रभा।
चक्रिणो वज्रसेनस्य, श्रीमतीति सुताऽभवत् ॥ ॥ ३७४ ॥

अन्यदा प्रमदोद्याने, क्रीडन्ती समुपागतम्। मुनिं केवलिनं वीक्ष्य, वन्दितं देव-दानवैः ॥ ३७५ ॥
जातजातिस्मृतिर्ज्ञात्वा, सा सर्वं पूर्वचेष्टितम्। धात्रेयीं पण्डितामाह, रहो विश्वासभाजनम् ॥ ३७६ ॥
॥ युग्मम् ॥

पुरा ममाऽऽसीदीशानकल्पे हृदयवल्लभः। ललिताङ्ग इति ख्यातस्तत्प्रियाऽहं स्वयम्प्रभा ॥ ३७७ ॥

---

१ °भामेनां, भावि° संता० ॥ २ सन्ति, ता° संता० ॥ ३ सलक्ष्मी° संता० ॥

स च मध्यवनात् पूर्वं, च्युतः क्वाप्यभवद् भुवि । न ज्ञायते ततस्तस्य, प्रयत्नं प्राप्तये कुरु ॥ ३७८ ॥
पण्डिताऽपि श्रुताशेषवृत्तान्तानुगतं पटम् । लेखयित्वाऽङ्गणोपान्ते वज्रसेनस्य चक्रिणः ॥ ३७९ ॥
सेवागतानां सर्वेषां, कुमाराणामदर्शयत् । दृष्ट्वैतद् वज्रजङ्घोऽपि, जातजातिस्मृतिर्जगौ ॥ ३८० ॥
मम पूर्वभवः सोऽयं, पण्डिते ! लेखितः कुतः ? । दिव्यज्ञानवता केन, कथितं वा तवामतः ? ॥ ३८१ ॥
एकैकशस्तया पृष्टः, पर्वतादिविनिर्णयम् । पूर्वदृष्टानुसारेण, स यथाविधमभ्यधात् ॥ ३८२ ॥
अथोत्सुकतया धृतमनाख्यायाऽपि पण्डिता । श्रीमत्याः पुरतो गत्वा, तद्वृत्तान्तं व्यजिज्ञपत् ॥ ३८३ ॥
वज्रसेनोऽपि विज्ञप्तः, स्वयं पण्डितया तथा । सुवर्णजङ्घपुत्रं तं, कुमार्या पर्यणीनयत् ॥ ३८४ ॥
सोऽथ श्वशुरमापृच्छ्य, लोहार्गलपुरं गतः । स्वयं जिघृक्षुणा दीक्षां, पित्रा राज्ये निवेशितः ॥ ३८५ ॥
सुतं पुष्कलपालाख्यं, राज्ये कृत्वा स चक्रभृत् । वज्रसेनोऽपि सञ्जज्ञे, मुनीभूयाथ तीर्थकृत् ॥ ३८६ ॥
अन्यदा पुष्कलक्ष्मापं, श्रुत्वा शत्रुभिरावृतम् । वज्रजङ्घोऽपि साहाय्यं, कर्तुं तस्य पुरीं ययौ ॥ ३८७ ॥
तत्र शत्रून् विनिर्जित्य, श्रीमत्या सहितोऽथ सः । व्रजन् निजपुरं मार्गे, विलोक्य मुनिसत्तमौ ॥ ३८८ ॥
आत्मीयावेव सोदर्यौ, केवलज्ञानशालिनौ । नमश्चक्रे कृती नाम्ना, सेनान्तौ मुनि-सागरौ ॥ ३८९ ॥
॥ युग्मम् ॥
अथैवं चिन्तयामास, वज्रजङ्घनरेश्वरः । अहो ! मे मन्दभाग्यत्वमहो ! मे मतिहीनता ॥ ३९० ॥
यदहं प्राप्तवान् लक्ष्मीं, वान्तप्रायामिमां पितुः । एतौ चारित्रसाम्राज्यं, प्रापतुः सोदरौ तु मे ॥ ३९१ ॥
अधुनाऽपि पुरं गत्वा, दत्त्वा राज्यं स्वसूनवे । चारित्राशनिना कर्मद्रुमं भस्मीकरोम्यहम् ॥ ३९२ ॥
इति निश्चित्य भूपालो, लोहार्गलपुरं गतः । प्रातर्दित्सुरयं राज्यं, प्रसुप्तः श्रीमतीयुतः ॥ ३९३ ॥
अज्ञातपरमार्थेन, राज्यलोभान्धचेतसा । विषधूमप्रयोगेण, घातितो निशि सूनुना ॥ ३९४ ॥ युग्मम् ॥
अथोत्तरकुरुष्वेष, समं दयितया तया । नृपो युगलधर्माऽऽयुर्यथाक्षेत्रमपालयत् ॥ ३९५ ॥
सौधर्मकल्पे सङ्कल्पोपनतैः प्रीणितौ सुखैः । स्नेहस्यूताविवाभूतामेककालमुभौ सुरौ ॥ ३९६ ॥
वज्रजङ्घस्य जीवोऽथ, जम्बूद्वीपे दिवश्च्युतः । क्षितिप्रतिष्ठितपुरे, विदेहक्षेत्रमण्डने ॥ ३९७ ॥
वैद्यस्य सुविधेः सूनुर्जज्ञे सत्कर्मकर्मठः । जीवानन्दाख्यया ख्यातो, वैद्यविद्याविशारदः ॥ ३९८ ॥
ईशानचन्द्रभूभर्तुस्तत्रैव नगरे तदा । कान्तायां कनकवत्यां, जज्ञे पुत्रो महीधरः ॥ ३९९ ॥
लक्ष्म्यां च जज्ञे कान्तायां, सुनासीरस्य मन्त्रिणः ।
सुतः सुबुद्धिर्विख्यातो, नाम्ना च क्रियया च यः ॥ ॥ ४०० ॥
प्रियायां शीलवत्यां च, धनाख्यश्रेष्ठिनस्तदा । नन्दनो गुणरत्नानामाकरोऽभूद् गुणाकरः ॥ ४०१ ॥
बभूवाऽभयमत्यां च, पत्न्यां सार्थपतेः सुतः । नाम्ना सागरदत्तस्य, पूर्णभद्र इति श्रुतः ॥ ४०२ ॥
सोऽप्यत्र श्रीमतीजीवश्च्युतः सौधर्मकल्पतः । बभूवेश्वरदत्तस्य, श्रेष्ठिनः केशवः सुतः ॥ ४०३ ॥
एषामपि च पञ्चानां, समानगुणशालिनाम् । जीवानन्देन वैद्येन, सह सख्यमभूत् तदा ॥ ४०४ ॥
सङ्गतानामथामीषामन्येद्युर्वैद्यवेश्मनि । साधुर्माधुकरीं भिक्षां, कुर्वन् नेत्रपथं ययौ ॥ ४०५ ॥
तं पृथ्वीपालभूभर्तुः, पुत्रं किल गुणाकरम् । आचवन्तं तपःकष्टानुष्ठानैर्वीक्ष्य कुष्ठिनम् ॥ ४०६ ॥
महीधरकुमारस्तं, वैद्यपुत्रं तदाऽवदत् । धिगिदं भिषजां जन्म, धिगिदं शास्त्रकौशलम् ॥ ४०७ ॥

१ °म, समं मैत्र्यमभूत् संता° पाता° ॥

अनीहानां शरीरेऽपि, परत्रैकरतात्मनाम् । यदीदृशानां साधूनां, नोपकाराय जायते ॥ ४०८ ॥
यल्लोकमल-मूत्रादिघ्राणान्मालिन्यमर्जितम् । तदिदं क्षाल्यतामद्य, मुनेरारोग्यदानतः ॥ ४०९ ॥
जीवानन्दो जगादैवमथ राजेन्दुनन्दनम् । युवाऽपि वृद्धबुद्धिस्त्वं, युक्तमेवोक्तवानिति ॥ ४१० ॥
किन्तु दीनारलक्षेण, प्रत्येकमपि दुर्लभैः । निगृह्यते यतेरस्य, रोगोऽयं भेषजैस्त्रिभिः ॥ ४११ ॥
एतेषु लक्षपाकाख्यं, तैलमस्त्येव मद्गृहे । गोशीर्षचन्दनं रत्नकम्बलं च पुनर्नहि ॥ ४१२ ॥
इत्युक्ते तेन ते पञ्च, विपणिश्रेणिमण्डनम् । कञ्चिन्महेभ्यमभ्येत्य, श्रेष्ठिनं श्रेष्ठमूचिरे ॥ ४१३ ॥
अपि दीनारलक्षाभ्यां, देहि गोशीर्ष-कम्बलौ । यदाभ्यां कर्तुमिच्छामश्चिकित्सां रोगिणो मुनेः ॥ ४१४ ॥
तेषामिति वचः श्रुत्वा, विस्मयस्मेरमानसः । जगाद सादरं श्रेष्ठी, धन्याः ! शृणुत मद्वचः ॥ ४१५ ॥
कुष्ठरोगाभिभूतस्य, योग्यावेतौ महामुनेः । राज्येनापि न लभ्येते, दूरे दीनारदर्शनम् ॥ ४१६ ॥
सन्ति पुण्यनिदानानि, यानि दानानि कोटिशः । एतैरारोग्यदानस्य, शतांशेनापि नोपमा ॥ ४१७ ॥
तद् गृह्णीत विना मूल्यमनुगृह्णीत मां मुदा । श्रेष्ठीत्युक्त्वाऽर्पयामास, रत्नकम्बल-चन्दने ॥ ४१८ ॥
ततस्ते समुपादाय, शकुनैः शुभशंसिभिः । जीवानन्देन सहिता, मुनेरनुपदं ययुः ॥ ४१९ ॥
कायोत्सर्गासनासीनमघोन्यग्रोधभूरुहः । बाह्योद्यानेऽथ ते वीक्ष्य, नमश्चक्रुर्मुनीश्वरम् ॥ ४२० ॥
ततो मुनिमनुज्ञाप्य, तैलेनाभ्यज्य वैद्यभूः । निश्चेतनेऽथ तद्देहे, क्षिप्तवान् रत्नकम्बलम् ॥ ४२१ ॥
तैलतापेन तेनाथ, व्याकुलास्तत्कलेवरात् । निःसृत्य शीतले लीनाः, कृमयो रत्नकम्बले ॥ ४२२ ॥
अथ गोशवमानीय, तस्योपरि दयापरः । कम्बलात् पातयामास, कृमीन् वैद्यवरः स्वयम् ॥ ४२३ ॥
गोशीर्षचन्दनस्यन्दैरिन्दुनिस्यन्दसुन्दरैः । शमिनः शमयामास, स तापव्यापदं मुदा ॥ ४२४ ॥
त्रिर्विधाय क्रियामित्थं, कृमीनतुलकौशलः । गोशवे पातयामास, त्वग्मांसास्थिगतानयम् ॥ ४२५ ॥
कैश्चिद् दिनैः शमिस्वामी, चामीकरसमच्छविः । क्षमितस्तैर्विहाराय, पुनर्नववपुर्ययौ ॥ ४२६ ॥
वणिक्श्रेष्ठोऽपि भैषज्यदानप्रभववैभवात् । अन्तकृत्केवलीभावं, तस्मिन्नेव भवेऽभजत् ॥ ४२७ ॥
तेऽपि कम्बल-गोशीर्षशेषं विक्रीय काञ्चनैः । प्रासादं कारयामासुः, स्वेन लक्षद्वयेन च ॥ ४२८ ॥
कियत्याऽप्यथ कालेन, समं सञ्जातभावनाः । अतं भाप्याऽच्युते कल्पे, शिश्रियुस्त्रिदशश्रियम् ॥ ४२९ ॥
द्वाविंशत्यतरायुष्कास्ते सर्वेऽप्यच्युताच्च्युताः । प्राग्द्वीपप्राग्विदेहेषु, तटे लवणवारिधेः ॥ ४३० ॥
विजये पुष्कलावत्यां, पुण्डरीकिण्यधीशितुः । वज्रसेननृपस्याऽऽसन्, धारिण्यां पञ्च सूनवः ॥ ४३१ ॥
॥ युग्मम् ॥

अभूत् तेषु भिषग्जीवो, वज्रनाभाभिधोऽग्रजः । चतुर्दशमहास्वप्नशिष्टसाम्राज्यवैभवः ॥ ४३२ ॥
बाहुः सुबाहुः पीठोऽथ, महापीठः क्रमादमी । जीवास्ततो नृपा-ऽमात्य-श्रेष्ठि-सार्थेशजन्मिनाम् ॥ ४३३ ॥
आसीत् केशवजीवोऽपि, सुयशा राजपुत्रकः । प्राग्भवस्नेहतः सोऽपि, वज्रनाभमशिश्रियत् ॥ ४३४ ॥
तीर्थप्रवृत्त्यै विज्ञप्तस्ततो लोकान्तिकैः सुरैः । वज्रसेननृपो राज्ये, निवेश्य निजमात्मजम् ॥ ४३५ ॥
सांवत्सरिकदानानि, दत्त्वा देवेन्द्रवन्दितः । चारित्रसम्पदा साकं, मनःपर्यायमासदत् ॥ ४३६ ॥
वज्रनाभमहीनाथो, महीमथ महाभुजः । सुयशःसारथिः शक्रसमलक्ष्मीरपालयत् ॥ ४३७ ॥

१ 'धानिदम् खंता० पाता० ॥ २ 'युस्त्रिदिवः श्रियम् वता० ॥ ३ जन्मनाम् खंता० पाता० ॥ ४ 'मार्जयत् पाता० ॥

केवलं वज्रसेनस्य, तस्य तीर्थकृतस्तदा । चक्रं तु सममेवाभूद् वज्रनाभस्य भूभुजः ॥ ४३८ ॥
वज्रनाभो विजित्याथ, विजयं पुष्कलावतीम् । प्राप्तचक्रिपदः कामं, धर्म्यकर्माणि निर्ममे ॥ ४३९ ॥
अन्यदा जातवैराग्यस्तातपादान्तमागतः । राज्यं न्यस्य सुते दीक्षां, सबन्धुर्जगृहे नृपः ॥ ४४० ॥
भवोपग्राहिकर्माणि, क्षयं नीत्वाऽथ निर्वृतिम् । । वज्रसेनप्रभौ प्राप्ते, धरायां विजहार सः ॥ ४४१ ॥
द्वादशाङ्गधरस्यास्य, सिद्धयः सकला अपि । वज्रनाभमुनीन्द्रस्य, पादपीठान्तिकेऽलुठन् ॥ ४४२ ॥
अन्येऽपि बन्धवस्तस्य, समं सुयशसाऽभवन् । एकादशाङ्गपारीणा, महिम्नां च महास्पदम् ॥ ४४३ ॥
विंशत्याऽऽराधितैः स्थानैरर्हद्भक्तिपुरःसरैः । वज्रनाभमुनीन्द्रोऽथ, तीर्थकृत्कर्म निर्ममे ॥ ४४४ ॥
वैयावृत्येन साधूनां, बाहुश्चक्रिपदमदम् । सुबाहुस्तु बलाधायि, कर्म निर्मितवान् मुनिः ॥ ४४५ ॥
प्रशंसां च तयोश्चक्रे, वज्रनाभमुनीश्वरः । तेन पीठ-महापीठौ, प्रकामं दुर्मनायितौ ॥ ४४६ ॥
तदीर्ष्याजनितं कर्म, ताभ्यामालोचनां विना । स्त्रीभावफलदं चक्रे, मायामिथ्यात्वयोगतः ॥ ४४७ ॥
क्रमाद् षडपि ते पूर्वलक्षान् दीक्षां चतुर्दश । पालयित्वाऽथ सर्वार्थसिद्धिश्रियमशिश्रियन् ॥ ४४८ ॥

इत्यऽनुत्तरविमाननिवासश्रीविलासविकसन्मनसस्ते ।
निर्वृतिप्रतिभुवं भवभाजां, भेजिरे निरुपमां सुखलक्ष्मीम् ॥ ॥ ४४९ ॥

**॥ इति श्रीविजयसेनसूरिशिष्यश्रीमदुदयप्रभसूरिविरचिते श्रीधर्माभ्युदय-
नाम्नि श्रीसङ्घपतिचरिते लक्ष्म्यङ्के महाकाव्ये श्रीऋषभस्वामि-
पूर्वभववर्णनो नाम द्वितीयः सर्गः समाप्तः ॥**

यस्तीर्थयात्राभवपुण्ययोगान्मात्राधिकोऽभूद् भगवत्प्रसादः ।
श्रीवस्तुपालस्तममुं पृथिव्यां, प्रासादमूर्त्या प्रकटीचकार ॥ १ ॥[3]

॥ [4]ग्रं० ४५६ उभयं ५७७ ॥

---

१ धर्मक॰ पाता० ॥ २ °प्रदेयस्वा° वता० ॥
३ एतत्पद्यानन्तरं पाता० पुस्तकेऽयं श्लोकोऽधिक उपलभ्यते—या श्रीः स्वयं जिनपतेः पदपद्मसद्मा, भालस्थले सपदि सङ्गमिते समेता। श्रीवस्तुपाल! तत्र भालनिभालनेन, सा सेवकेषु सुख-मुन्मुखता विभाति ॥ २ ॥ वता० संता० पुस्तकयोः पुनरयं श्लोक. तृतीयसर्गप्रान्ते वर्तते ॥
४ ग्रंथाग्रम्—४५३ ॥ उभयं ५६८ ॥ इति पाता० ॥

## तृतीयः सर्गः ।

कुलकराणामुत्पत्तिर्नीतयश्च

इतश्च जम्बूद्वीपेऽस्ति, विदेहेष्वपरेषु पूः । ईशानचन्द्रक्ष्माचन्द्रत्राता नाम्नाऽपराजिता ॥ १ ॥
तत्र चन्दनदासस्य, श्रेष्ठिनो नन्दनोऽभवत् । ख्यातः सागरचन्द्राख्यो, द्राक्षोपमवचस्ततिः ॥ २ ॥
कौमुद्यां याद्यमुद्यानमन्येद्युः सपुरे नृपे । सम्प्राप्तेऽशोकदत्तेन, समं मित्रेण सोऽप्यगात् ॥ ३ ॥
श्रेष्ठिनः पूर्णभद्रस्य, नन्दिनीं बन्दिसङ्कटात् । असावत्रान्तरे दृष्ट्वाऽमोचयत् प्रियदर्शनाम् ॥ ४ ॥
तावन्योन्यसमालोकप्रमोदहृतमानसौ । छलैकदृष्टेः कन्दर्पपिशाचस्य वशङ्गतौ ॥ ५ ॥
स्वं स्वं गृहमथो यातावन्योन्यविरहातुरौ । न रतिं प्रापतुः क्वापि, कामाज्ञा हि सुदुःसहा ॥ ६ ॥
अथ सागरचन्द्रस्य, श्रुत्वा तद् विक्रमाद्भुतम् । पिता चन्दनदासोऽस्मै, सामधाम गिरं जगौ ॥ ७ ॥
कृथा मास्म वृथा वत्स !, विक्रमक्रममन्यदा । यतो न वणिजां क्वापि, शौर्यमौचित्यमश्नुते ॥ ८ ॥
अपि चाशोकदत्तोऽयं, छद्मनः सद्म जङ्गमम् । सङ्गमस्तेन नैतेन, समं कार्यः क्वचित् त्वया ॥ ९ ॥
ईर्ष्यालुः कोऽपि तातस्य, मिथ्यैवेदं न्यवेदयत् । यन्मे वयस्यो मायावी, मायावीतमना अपि ॥ १० ॥
स स्वच्छप्रकृतिश्चित्ते, चिन्तयन्निति सागरः । तातादेशः प्रमाणं मे, नित्यमित्यवदत् कृती ॥ ११ ॥ युग्मम् ॥
चन्दनः पूर्णभद्रश्च, चित्तज्ञौ सुतयोः स्वयोः । कारयाञ्चक्रतुः प्रीत्या, पाणिग्रहमहोत्सवम् ॥ १२ ॥
पत्या सागरचन्द्रेण, तुल्येन प्रियदर्शना । लक्ष्मीर्नारायणेनेव, प्रीता नीता कृतार्थताम् ॥ १३ ॥
प्रियेऽन्यदा बहिर्याते, सति तद्धामगामिना । प्रार्थिताऽशोकदत्तेन, त्यक्तलज्जेन साऽवदत् ॥ १४ ॥
त्वं मायातः समायातः, किमु रे ! मम मन्दिरे[1] ? ।
तुच्छ ! तद् गच्छ भर्ता मे, स्वच्छस्त्वां मित्रमिच्छति ॥ ॥ १५ ॥
अथोद्विग्नो विनिर्गत्य, सागराग्रेऽब्रवीदिदम् । पत्न्यास्ते दुश्चरित्रायाः, सङ्कटेऽद्यापतं सखे ! ॥ १६ ॥
श्रुत्वेति सागरोऽप्यूचे, क्षणं विकृतमानसः । सखे ! न खेदस्ते दक्ष !, विधातुमुचितः क्वचित् ॥ १७ ॥
स्नेहानुविद्धयोर्भ्रातरावयोर्मानसक्षतिः । भाविनी नाविनीतायाः, कृते तस्याः कदाचन ॥ १८ ॥
ऋजुप्रकृतिना तेन, स दुष्ट इति भाषितः । कामं मुदितचित्तोऽभूत्, स्वभावोऽयं दुरात्मनाम् ॥ १९ ॥
स्वयोपायामदोषायामपि मित्रगिरा तया । सागरोऽभूद् गतप्रेमा, ज्ञापयामास तां न तु ॥ २० ॥
प्रियदर्शनया सार्क, मृत्वा कालेन सागरः । जम्बूद्वीपेऽत्र भरतक्षेत्रार्द्धे दक्षिणेऽभवत् ॥ २१ ॥
तृतीयारेऽवसर्पिण्यां, सिन्धु-गङ्गान्तरक्षितौ[3] । शेषे पल्योपमाष्टांशे, युग्मधर्मा रविच्छविः ॥ २२ ॥
॥ युग्मम् ॥
माययाऽशोकदत्तोऽपि, निष्पन्नोऽत्रैव कुञ्जरः । चतुर्दन्तः सितच्छायकायस्तं दृष्टवान् भ्रमन् ॥ २३ ॥
आविर्भूताद्भुतप्रीतिः, सकरेणुः करेण तम् । आलिङ्ग्याऽऽरोपयामास, निजस्कन्धे सविस्मयम् ॥ २४ ॥

---

१ °तयोःस्तयोः वता० ॥ २ °न्दिरम् ? संता० ॥ ३ °सक्षितिः वता० ॥

अयं मया क्वचिद् दृष्ट, इत्यन्योन्यं सचिन्तयोः। तयोः स्मृतिपथं यातः, स्नेहः पूर्वभवोद्भवः ॥ २५ ॥
प्राग्भवस्मरणाज्ज्ञातनीतिः स्कन्धाधिरोपितः। करिणा तेन स ख्यातिं, लेभे विमलवाहनः ॥ २६ ॥
प्रमावादवसर्पिण्याः, कालेऽत्र ममताजुषाम्। न ददुर्वाञ्छितं कल्पतरवः स्तोकतां गताः ॥ २७ ॥
ममायमिति कल्पद्रुविषये कलहाकुलाः। अभवन् मार्गगाः सर्वे, तस्य हाकारदण्डतः ॥ २८ ॥
तस्य चन्द्रयशोनाम्नि, कलत्रेऽभवदन्यदा। धनुरष्टशतीतुङ्गं, प्राच्यसंहननं क्षिति ॥ २९ ॥
विलुप्तसङ्ख्यपूर्वायुः, स्त्री-पुंसमिथुनं किल। चक्षुष्मांश्चन्द्रकान्ता चेत्यनयोर्नाम कल्पितम् ॥ ३० ॥
युग्मम् ॥

जरा-रोगौ विना मृत्वा, ततो विमलवाहनः। सुपर्णाख्यकुमारेषु, सुरः सममवन्नयः ॥ ३१ ॥
नागलोकेष्वभूच्चन्द्रयशा अपि मृता ततः। अगान्नागकुमारेषु, कुञ्जरोऽपि च्युतस्ततः ॥ ३२ ॥
अन्त्यकालेऽथ चक्षुष्मानपि युग्ममजीजनत्। यशस्वी च सुरूपा च, चन्द्रकान्ताङ्गसम्भवम् ॥ ३३ ॥
चक्षुष्मान् स सुपर्णेषु, मृत्वोत्पेदे महासुरः। चन्द्रकान्ताऽपि नागेषु, समानसमयं किल ॥ ३४ ॥
अथो यशस्विनस्तस्य, पितृवत् प्रभुताजुषः। धार्ष्ट्याल्लङ्घितहाकारनीतिभिर्मिथुनैः स्थितम् ॥ ३५ ॥
तच्छासनाय माकारदण्डं चक्रेऽथ स प्रभुः। यथापराधं प्रायुङ्क्त, नीतिद्वयमथ क्रमात् ॥ ३६ ॥
अभिचन्द्रोऽभवत् पुत्रः, प्रतिरूपा च कन्यका। गौर-श्यामरुची पत्न्यां, सुरूपायां यशस्विनः ॥ ३७ ॥
यशस्व्यब्धिकुमारोऽभूत्, सुरूपा तस्य वल्लभा। विपद्य सममेवाहिकुमारः समजायत ॥ ३८ ॥
पुत्रः प्रसेनजिन्नाम, चक्षुःकान्ता च नन्दनी। अभिचन्द्रस्य जज्ञाते, प्रतिरूपाङ्गसम्भवौ ॥ ३९ ॥
अभिचन्द्रो विपद्याऽब्धिकुमारेषूदपद्यत। सहैव प्रतिरूपा तु, जज्ञे नागकुमारकः ॥ ४० ॥
पितृवद् युग्मिनां शास्ति, प्रसेनजिति कुर्वति। सति हाकार-माकारलङ्घने धार्ष्ट्यतः पुनः ॥ ४१ ॥
धिक्कारनीतिं निर्माय, निर्मायः क्रमशस्त्रिभिः। दण्डैरभीभिश्चण्डाज्ञो, मिथुनानि शशास सः ॥ ४२ ॥
॥ युग्मम् ॥

चक्षुःकान्ताऽथ तत्कान्ता, मरुदेवं तनूद्भवम्। सुतामसूत श्रीकान्तां, चेति तद्युग्मजातकौ ॥ ४३ ॥
मृत्वा प्रसेनजिद् द्वीपकुमारेष्वथ निर्जरः। चक्षुःकान्ताऽथ नागेषु, समं समुदपद्यत ॥ ४४ ॥
पितृवन्मरुदेवस्य, शासतोऽथ प्रजा निजाः। श्रीकान्तायां सपादाग्रधनुःपञ्चशतोच्छ्रयौ ॥ ४५ ॥
शातकुम्भद्युतिर्नाभिर्मरुदेवा प्रियङ्गुरुक्। नाभेत्यजायतां पुत्रः, पुत्री च युगजातकौ ॥४६॥ युग्मम् ॥
सङ्ख्यातपूर्वप्रमितं, तयोरायुरजायत। पैतृकादायुषः किञ्चिन्न्यूनमन्यूनपुण्ययोः ॥ ४७ ॥
प्राप द्वीपकुमारत्वं मरुदेवो विपद्य सः। श्रीकान्ता तस्य कान्ता तु, तदा नागकुमारताम् ॥ ४८ ॥

## घनसार्थवाहजीवस्य ऋषभतीर्थकृतश्चरितम्

अथो विदधतो नाभेर्युग्मिनामनुशासनम्। तृतीयारस्य शेषेषु, पूर्वलक्षेषु केषुचित् ॥ ४९ ॥
आयुर्भुक्त्वा त्रयस्त्रिंशत्सागरोपमसम्मितम्। जीवः श्रीवज्रनाभस्य, च्युत्वा सर्वार्थसिद्धितः ॥ ५० ॥
कृष्णाषाढस्य तुर्येऽह्न्युत्तराषाढास्थिते विधौ। कुक्षौ श्रीमरुदेवायाः, प्रभुः समवातरत् ॥ ५१ ॥
॥ विशेषकम् ॥

१ °पा चास्य पाता० ॥ २ °सम्भवम् खंता० ॥ ३ °दचतुर्थेऽह्न्यु° खंता० पाता० ॥

अवतारे प्रभोस्तत्र, पवित्रे भुवनत्रयम् । ध्वस्तध्वान्तं सुखिस्वान्तं, शान्तदुःखमभूत् क्षणम् ॥ ५२ ॥
वृषभ-सिंह-श्री-दाम-चन्द्रा-ऽऽदित्यान् ध्वजं घटम् । सरो-वार्द्धि-विमानानि, रत्नौघ-ज्वलितानलौ ॥ ५३ ॥
एतान् लोकोत्तरस्फूर्तिप्रभावाद्भुतसूचकान् । तदा चतुर्दश स्वप्नान्, मरुदेवी व्यलोकयत् ॥ ५४ ॥
॥ युग्मम् ॥
अथ प्रातः प्रबुद्धाऽसौ, नाभेः स्वप्नानचीकथत् । सोऽप्युवाचेति पुत्रस्ते, भावी कुलकरोत्तमः ॥ ५५ ॥
अथाऽऽसनप्रकम्पेन, विज्ञायावतरं प्रभोः । समं समन्तात् तत्रैत्य, स्वप्नार्थं वज्रिणो जगुः ॥ ५६ ॥
मरुदेवीं नमस्कृत्य, ततः सर्वे सुरेश्वराः । जग्मुर्निजं निजं स्थानममन्दानन्दमेदुराः ॥ ५७ ॥
निधानं रत्नगर्भेव, बिभ्राणा गर्भमद्भुतम् । दिनेषु परिपूर्णेषु, श्यामचैत्राष्टमीदिने ॥ ५८ ॥
उत्तराषाढया युक्ते, विधावुच्चैः शुभग्रहैः । देवी युगलधर्माणं, सुतरत्नमसूत सा ॥ ५९ ॥ युग्मम् ॥
सुखैस्तदोदितं वातैर्मुदितं नारकैरपि । जगत्त्रयेऽपि तेजोऽभूदनदद् दिवि दुन्दुभिः ॥ ६० ॥
पीठकम्पा-ऽवधिज्ञानाज्ज्ञात्वाऽऽदिजिनजन्म तत् । अष्टाधोलोकवासिन्यः, समीयुर्दिक्कुमारिकाः ॥ ६१ ॥

भोगङ्करा भोगवती, तोयधाराऽप्यनिन्दिता ।
सुभोगा पुष्पमाला च, विचित्रा भोगमालिनी ॥ ६२ ॥

आभिर्नत्वा च नुत्वा च, भेतव्यं नेत्युदीर्य च । हेतुरागमने स्वामिमातुस्तथ्यमकथ्यत ॥ ६३ ॥
॥ युग्मम् ॥
उत्तरस्यां दिशि स्तम्भसहस्रं प्राङ्मुखं च ताः । वातपूतद्विगव्यूति, व्यधुः सूतिगृहं बृहत् ॥ ६४ ॥
उत्तंसाम्भोजभृङ्गालिध्वानस्थानप्रदानतः । प्रीता गीतानि गायन्त्यो, नत्वा प्रभुमभि स्थिताः ॥ ६५ ॥
एत्य कम्पासनौ ज्ञात्वा, मेरुस्थाः स्वर्गलोकगाः । प्रणेमुर्दिक्कुमार्योऽष्टौ, जिनं तज्जननीमपि ॥ ६६ ॥

मेघङ्करा वत्समित्रा, सुवत्सा मेघमालिनी ।
सुमेघा मेघमाला च, वारिषेणा बलाहिका ॥ ६७ ॥

कृताम्बुदा मुदा हत्वा, रेणुं सुरभिवारिणा । आयोजनं ततः पुष्पैर्वृष्टिं पञ्चविधैर्व्यधुः ॥ ६८ ॥
॥ युग्मम् ॥
अभ्येत्य दिक्कुमार्योऽष्टौ, पौरस्त्यरुचकाद्रिगाः । नेमुर्जिनं तदम्बां च, करस्फुरितदर्पणाः ॥ ६९ ॥

नन्दा नन्दोत्तराऽऽनन्दा, वैजयन्त्यपराजिता ।
जयन्ती विजया चैव, किञ्चान्या नन्दिवर्द्धना ॥ ७० ॥

आयाता दिक्कुमार्योऽष्टावपाच्यरुचकाद्रिगाः । नत्वा मात्रा समं नाथं, सभृङ्गाराः सगीतयः ॥ ७१ ॥
लक्ष्मीवती चित्रगुप्ता, समाहारा वसुन्धरा । सुप्रबद्धा शेषवती, सुप्रदत्ता यशोधरा ॥ ७२ ॥
अथ प्रतीचीरुचकादुपेत्याष्टौ कुमारिकाः । नत्वाऽर्हन्तं च देवीं च, तस्थुर्व्यजनपाणयः ॥ ७३ ॥
भद्रा नवमिका सीता, एकनासा पृथिव्यय । इलादेवी-सुरादेवी-पद्मवत्य इति श्रुताः ॥ ७४ ॥
उदीचीरुचकादष्टावागता दिक्कुमारिकाः । प्रणम्य देवं देवीं च, चामराणि करे दधुः ॥ ७५ ॥

---

१ °दरेषा म्य° बता० ॥ २ °ददेयां न° बता० ॥ ३ °दनक्षत्रे, विधा° संता० ॥ ४ °नात् श्रा° संता० पाता० ॥ ५ °लाहका संता० ॥ ६ °ऽष्टौ, पौ° संता० ॥ ७ °प्रबुद्धा संता० पाता० ॥

वारुणी पुण्डरीका च, हासा ह्रीः श्रीरलम्बुसा । ख्याताः सर्वप्रभा मित्रकेशी चेत्यभिधानतः ॥ ७६ ॥
अष्टाष्ट दिक्कुमार्येताः, पौरस्त्यरुचकादितः । विज्ञप्य पूर्ववद् देवीं, दिक्षु पूर्वादिषु स्थिताः ॥ ७७ ॥
निपीतस्फीतपीयूषपूरोद्गारैर्वरैः स्वरैः । तेनुर्जिनगुणग्रामगानमानन्दमन्दिरम् ॥ ७८ ॥
दशभिः कुलकम् ॥

विदिशारुचकादेत्य, चतस्रो दिक्कुमारिकाः । नत्वा देवं च देवीं च, गायन्त्यो दीप्तदीपकाः ॥ ७९ ॥
सतेरा चित्रकनका, चित्रा सौत्रामणी तथा । विज्ञप्य पूर्ववत् तस्थुरैशान्यादिविदिक्षु ताः ॥ ८० ॥
॥ युग्मम् ॥

चतस्रो दिक्कुमार्योऽथ, रुचकद्वीपतोऽभ्ययुः । सुरूपा-रूपिकावत्यौ, रूपा-रूपांसिके तथा ॥ ८१ ॥
चतुरङ्गुलतो नालनालं छित्त्वा न्यधुर्दरे । तत्र रत्नादिना पूर्णे, दूर्वया पीठिकां व्यधुः ॥ ८२ ॥
सिंहासन-चतुःशालजुषलीन् कदलीगृहान् । चक्रुश्च मूलप्रासादात्, प्राचीनोत्तर-दक्षिणान् ॥ ८३ ॥
अभ्यङ्गमुभयोश्चक्रुश्चतुःशालेऽथ दक्षिणे । लक्षपाकेन तैलेन, दिव्यमुद्वर्तनं च ताः ॥ ८४ ॥
संस्नप्य प्राक् चतुःशाले, लिप्त्वा गोशीर्षचन्दनैः । ताश्च व्यभूषयन् दिव्यचेला-ऽलङ्करणैरुभौ ॥ ८५ ॥
ताश्चोत्तरचतुःशालपीठमानीतयोस्तयोः । हुत्वा हिमाद्रिगोशीर्षं, रक्षापोट्टलिकां न्यधुः ॥ ८६ ॥
पर्वतायुर्भवेत्युक्त्वा, कर्णाभ्यर्णे जिनस्य ताः । स्फारमास्फालयामासुराशु पाषाणगोलकौ ॥ ८७ ॥
अथो जिनं जिनाम्बां च, नीत्वा सूतिनिकेतने । मुदा तल्पे समारोप्य, गायन्त्यस्तस्थुरन्तिके ॥ ८८ ॥
नेदुर्दिवि तदा घण्टाश्चकम्पे वासवासनैः । अहो ! किमिदमित्येवमासदद् द्युसदां भयम् ॥ ८९ ॥
क्रुद्धो बद्धोद्यमः पूर्वं, शक्रो विक्रमकेशरी । सावधानोऽवधिज्ञानाज्ज्ञात्वा जन्म जगद्गुरोः ॥ ९० ॥
कोपाटोपं समुत्सृज्य, मुक्तसिंहासनस्ततः । प्राभिमुख्यात् कृतं दत्त्वा, नत्वा च त्रिजगद्गुरुम् ॥ ९१ ॥
समं समस्तैर्गीर्वाणैर्विधित्सुर्जिनमज्जनम् । आदिदेश सुराधीशः, सेनान्यं नैगमेषिणम् ॥ ९२ ॥
॥ विशेषकम् ॥

तद्वादितसुघोषाख्यघण्टया सह सर्वतः । नादाद् विमानघण्टानामधावन्त सुधाभुजः ॥ ९३ ॥
पञ्चयोजनशत्युच्चं, लक्षयोजनविस्तृतम् । पालकः पालकं यानं, चक्रे शक्रनिदेशतः ॥ ९४ ॥
महिषीभिः सहामात्यैः, साकं नाकेश्वरस्ततः । भेजे विमानं व्योमेव, विधुस्तारा-ग्रहान्वितः ॥ ९५ ॥
अथ नन्दीश्वरद्वीपे, गत्वा रतिकरे गिरौ । विमानं तत्र सङ्क्षिप्य, प्राप्तो जिनजनेर्गृहम् ॥ ९६ ॥
प्रदक्षिणिततीर्थेशसौधः सौधर्मनायकः । तद्विमानमुदक्प्राच्यां, संस्थाप्य प्रभुमभ्यगात् ॥ ९७ ॥
दृष्टमात्रं जिनं मात्रा, समं नत्वा सुरेश्वरः । त्रेधं प्रदक्षिणीकृत्य, कृत्यवित् प्रणनाम च ॥ ९८ ॥
मुदाऽथ द्युसदांनाथः, प्राह सोल्लासमानसः । मरुदेव्याः पुरो जन्ममहिम्ने स्वं समागतम् ॥ ९९ ॥
दत्त्वाऽवस्वापिनीं देव्याः, प्रतिच्छन्दं जगत्पतेः । स्नापयित्वा तदन्ते च, पञ्चमूर्तिर्बभूव सः ॥ १०० ॥
एकः पुरः सुरस्वामी, भुवनस्वामिनं न्यधात् । गोशीर्षचन्दनामोदशस्ते हस्ताम्बुजद्वये ॥ १०१ ॥
छत्रमत्र धरौकश्चामरे परितोऽप्युभौ । एको वेत्रीव निर्दम्भो, दम्भोलिं पुरतो हरिः ॥ १०२ ॥
रङ्गो रत्ननिवासाय, माचत्तमुनिर्भुः स्वयम् । निधाय हृदये यत्नादगमन्मेरुमूर्द्धनि ॥ १०३ ॥

२ 'स्वरैः बदा० ॥ २ 'कृतं कृत्वा, न' संता० पाता० ॥ ३ 'ह्यावृतः संता० पाता० ॥
४ 'भुः प्रभुम् संता० पाता० ॥

शिल्या पाण्डकवने, पाण्डुकम्बलया धृतम् । अध्यास्त वासवः स्नात्रपीठमुत्सङ्गितप्रभुः ॥ १०४ ॥
अस्मिन् महे महाघोषाघण्टानिर्घोषबोधिताः । इन्द्राश्चिषष्टिराजग्मुरपरे सपरिच्छदाः ॥ १०५ ॥
अच्युतेन्द्रोऽथ सौवर्णान्, रौप्यांन् मणिमयानपि । हेमरूप्य-हेमरत्न-रत्नरूप्यमयानपि ॥ १०६ ॥
हेमरूप्यमणिमयान्, भौमांश्च कलशान् सुरैः । अष्टोत्तरसहस्रं स, तान् प्रत्येकमचीकरत् ॥ १०७ ॥
कुम्भवत् पात्रिका-रत्नकरण्ड-स्थाल-दर्पणान् । भृङ्गार-पुष्पचङ्गेरी-सुप्रतिष्ठानकारयत् ॥ १०८ ॥
क्षीरोद-पुष्करोदाभ्यामम्भः साम्भोरुहं तदा । समृत्स्नं चान्यतीर्थेभ्यो, भरतैरावतादिषु ॥ १०९ ॥
आनिन्यिरे पद्महृदात्, किञ्चित् क्षुद्रहिमाद्रितः । तुवरौषध-सिद्धार्थ-कुसुमानि च ते सुराः ॥ ११० ॥

नन्दनात् पाण्डकाद् भद्रशालात् सौमनसाच्च ते ।
गन्धद्रव्याण्युपानीय, पानीयान्तर्निचिक्षिपुः ॥ १११ ॥
कुम्भानम्भोभिरापूर्य, स्फूर्जत्तूर्यरवोर्जितम् ।
क्षिप्त्वा पुष्पाञ्जलीन् शक्राः, स्नात्रमासूत्रयन् विभोः ॥ ११२ ॥

रूक्षाङ्गं गन्धकाषाय्या, व्यालिम्पन्नथ ते विभुम् । पात्रिकान्यस्तगोशीर्षश्रीखण्डद्रवकर्दमैः ॥ ११३ ॥
अभ्यर्चितोऽङ्के दध्रेऽथ, प्रभुरीशानवज्रिणा । सौधर्माधिपवद् भक्त्या, मूर्तीः पञ्च वितन्वता ॥ ११४ ॥
शृङ्गोच्छलज्जलान् दिक्षु, चतुरश्चतुरो वृषान् । विधाय विदधे स्नात्रं, सौधर्मेन्द्रोऽप्यथ प्रभोः ॥ ११५ ॥
पूजा-विलेपना-कल्पैरनल्पामोदमेदुरैः । विभुं विभूषयामास, दासवद् वासवः स्वयम् ॥ ११६ ॥
ततश्च पृथिवीपीठविलुठन्मौलिमण्डलः । नमस्कृत्य जगन्नाथं, हृष्टस्तुष्टाव वासवः ॥ ११७ ॥
नमस्ते विश्वनाथाय, विश्वानन्दप्रदायिने । विश्वोत्तरचरित्राय, विश्वतातांय तायिने ॥ ११८ ॥
श्रीयुगादिजगन्नाथ !, कृतावतरणे त्वयि । अद्याभूद् भरतक्षेत्रं, पवित्रं त्रिदिवादपि ॥ ११९ ॥
गते काले महामोहमेघव्यूहतमोमये । दिष्ट्या दृष्टा भवन्मूर्तिर्नेत्रकैरवकौमुदी ॥ १२० ॥
अस्मिन् जन्मनि मन्येऽहं, धन्यमद्यतनं दिनम् । यत्र त्वत्पदपद्माभ्यां, शिरः सुरभितं मम ॥ १२१ ॥
श्रीजिनेश ! दिनेशस्त्वमपूर्वप्रथितोदयः । उर्व्यां सर्वज्ञ ! कुर्वीथाः, शाश्वतं सुदिनोत्सवम् ॥ १२२ ॥
ईशानेशाद्यो नाथं, गृहीत्वा पञ्चरूपभाक् । यथाऽऽगतं सुधर्मेन्द्रः, सूतिकासदनं ययौ ॥ १२३ ॥
विनिवृत्त्य प्रतिच्छन्दं, विभुं तल्पे निवेश्य च । वाससी कुण्डले चात्र, मुमुचे नमुचेरिपुः ॥ १२४ ॥
अस्तन्यपाननिघ्नस्य, निजाङ्गुष्ठशिखालिहः । सुधा सुधाभुजां भर्त्रा, न्यधायि स्वामिनोऽङ्गुले ॥ १२५ ॥
अथ धात्रि प्रभोः स्वर्ण-रत्न-शय्या-ऽऽसनादिकम् । सारं सांसारिकं वस्तु, सर्वं श्रीदो न्यधापयत् ॥ १२६ ॥
जिनस्य जिनमातुर्वा, योऽशुभं चिन्तयिष्यति । तन्मूर्द्धा शतधा भावीत्युच्चैर्गिरमुदीर्य सः ॥ १२७ ॥
धात्रीकर्मप्रपञ्चाय, तत्पञ्चाप्सरसो हरिः । आदिदेश सदेशस्थाः, शश्वद् विश्वत्रयीगुरोः ॥ १२८ ॥
॥ युग्मम् ॥
सौधर्मेन्द्रस्ततोऽऽनन्दी, नन्दीश्वरवरं गतः । स्पष्टमष्टाहिकामत्र, चक्रे शक्रास्तथाऽपरे ॥ १२९ ॥
परेऽपि सर्वे सर्वेषु, शाश्वतार्हतसद्मसु । यथाविधि महं कृत्वा, यथागतमगुः सुराः ॥ १३० ॥
वृषभश्चिह्नमूरुस्थं, स्वप्ने प्राग् वृषभोऽप्यभूत् । प्रभोर्ऋषभ इत्याभ्यां, चक्रतुः पितरौ ततः ॥ १३१ ॥
पाल्यमानः पाल्यमानोऽथ, सुरस्त्रीभिः स पञ्चभिः । दधौ वृद्धिं प्रभिन्निभिः, साक्षात् संयमवत् प्रभुः ॥ १३२ ॥

---

१-२-३ 'रौप्य' संज्ञा० ॥ ४ 'दुरैः' संज्ञा० ॥ ५ 'शाम' सत्वं० ॥

तद्युग्मजन्यकन्यायाः, कन्याया नाम चक्रतुः । सुमङ्गलेति सम्प्रीतौ, नितरां पितरावथ ॥ १३३ ॥
वत्सरे स्वामिनः पूर्णे, जनकोत्सङ्गसङ्गिनः । सौधर्मेन्द्रोऽन्वयस्थित्यै, सेक्षुयष्टिः पुरोऽभ्यगात् ॥ १३४ ॥
प्रभुर्ज्ञातेन्द्रसङ्कल्पो, जग्राहेक्षुलतां च ताम् । इक्ष्वाकुसंज्ञं कृत्वेति, वंशं भर्तुर्ययौ हरिः ॥ १३५ ॥
विभुरभ्यागतैर्देवैरेव रम्यमरम्यत । नित्यमत्यद्भुतानेकरूपनिर्माणकर्मठैः ॥ १३६ ॥
प्राप्य प्रभुरथाङ्गुष्ठपानावस्थातिगं वयः । अप्रीयत फलैर्दिव्यैस्तैरुत्तरकुरूद्भवैः ॥ १३७ ॥
स्वामी क्रमात् प्रवर्द्धिष्णुः, स्पर्द्धिष्णुः कल्पपादपम् । सौभाग्यरूपभूपालभवनं यौवनं ययौ ॥ १३८ ॥
नैम्न्ये चन्द्रकुटुम्बेन, पद्मन्यक्कारभीरुणा । प्रभोर्नखमणिव्याजात्, पादपद्मे विराजतः ॥ १३९ ॥
भुजौ भातः प्रभोः श्राद्ध-साधुधर्मधरोद्धृतौ । भुजगेन्द्राविवोद्भिन्ननखरत्नाङ्गुलीफणौ ॥ १४० ॥
अन्योन्यमुपमीयन्ते, करांह्रि-नयनादयः । प्रभोर्मुकुरबिम्बेषु, नाभि-हृद्वदनादयः ॥ १४१ ॥
कारुण्यशालिताऽऽरण्यवारण्याग्रे जगद्गुरुः । अपाप्यत श्रुतिपयस्तृषितान् लोकदृङ्मृगान् ॥ १४२ ॥
बालकेलिरसोपात्तस्तालद्रुमतलेऽन्यदा । दारकः फलपातेन, कुतोऽपि मिथुनान्मृतः ॥ १४३ ॥
अथान्यमिथुनैर्बाला, परासुपितृ-वल्लभा । जातरूपसदृग्जातरूपश्रीर्नाभयेऽर्पिता ॥ १४४ ॥
साऽपि प्राप्यच्युतेव श्रीर्नयनानन्दकौमुदी । नन्दनीव सुनन्दाख्या, नाभिना साऽभिनन्दिता ॥ १४५ ॥
व्यतीनि पूर्वलक्षाणि, यावद् भोगफलोदयम् । प्रभुः स्वस्यावधिज्ञानाज्जानन् शक्रकृतोत्सवः ॥ १४६ ॥
सुमङ्गला-सुनन्दे ते, रति-प्रीतिनिभे ततः । निरस्तदर्प-कन्दर्पचर्यः पर्यणयज्जिनः ॥ १४७ ॥
अथारपूर्णपरपूर्वलक्षौ कुक्षौ सुमङ्गला । तौ बाहु-पीठयोर्जीवौ, च्युतौ सर्वार्थसिद्धितः ॥ १४८ ॥
सुनन्दाऽपि कृतानन्दा, तदानीमुदरे दधौ । तौ सुबाहु-महापीठौ, तत एव दिवश्च्युतौ ॥ १४९ ॥
दृष्ट्वा चतुर्दश स्वप्नानथ देवी सुमङ्गला । स्वाम्युक्तचक्रिमातृत्वप्रीता युग्ममसूत सा ॥ १५० ॥
सुतो भरत इत्यस्या, ब्राह्मीति च सुताऽभवत् । सुनन्दा बाहुबलिनं, सुन्दरीमप्यजीजनत् ॥ १५१ ॥
पुनरेकोनपञ्चाशत्सुतयुग्मानि वीर्यभूः । असूत भूतलस्फूर्तमङ्गलानि सुमङ्गला ॥ १५२ ॥
तदा च स्वामिनो दानाद्भुवादिव विस्मितैः । कल्पद्रुमैरदृश्यत्वं, तैर्जग्मे युग्मधर्मिणाम् ॥ १५३ ॥
मिथोऽथ मिथुनैः कालयोगात् कलिकदर्थितैः । एत्य विज्ञापितः स्वामी, समन्तादसमञ्जसम् ॥ १५४ ॥
ज्ञानत्रयवतो वाचं, ततो वाचंयमाग्रणीः । ऊचे भो ! भूपतिः शास्ति, न्यायवर्त्मातिवर्तिनः ॥ १५५ ॥
सोऽस्माकमस्त्विति तैरुक्ते, पिता दातेति सोऽब्रवीत् । नाभिनाऽपि समादिष्टे, भूपस्त्वं भूपमभ्ययुः ॥ १५६ ॥
अथ तस्याभिषेकाय, विशेषाद्धृष्टचेतसः । ते जग्मुर्युग्मिनस्तूर्णं, पयसे नयसेविनः ॥ १५७ ॥
तदा चासनकम्पेन, शक्रोऽवधिविबोधितः । कालं मत्वाऽभिषेकस्य, प्रभोरभ्यर्णमभ्यगात् ॥ १५८ ॥
[illegible] सिंहासनमुपः प्रभोः । चक्रे शक्रस्ततो राज्याभिषेकं तीर्थवारिभिः ॥ १५९ ॥
[illegible] शचीपतिः । विभुं व्यभूषयद् विश्वभूषणं भूषणैरपि ॥ १६० ॥
युग्मिनस्त्वब्जिनीपत्रैरम्भोऽप्यानीय चिक्षिपुः । भूषितस्य विभोर्योग्यं, न मूर्ध्नीति पदाब्जयोः ॥ १६१ ॥
सन्ति नरा विनीतानि, मिथुनानीति नीतिवित् । धनदेन विनीताख्यं, शक्रः पुरमचीकरत् ॥ १६२ ॥
[illegible]-द्वारकादिनाम् । अयोध्येत्यन्यनामानं, दिव्यां नगरीं न्यधात् ॥ १६३ ॥

१ 'का गर्भे शुभ' [illegible] ॥ २ सोऽभवत् [illegible] ॥ ३ 'व्यपु' [illegible] ॥
४ 'दर्थे' [illegible] ॥ ५ विविधु [illegible] ॥

विंशतौ पूर्वलक्षाणां, पूर्णायां जन्मतो विभुः । अयोध्यायामभूद् भूपः, प्रजापालनपण्डितः ॥ १६४ ॥
रूक्षस्निग्धेन कालेन, जातेऽग्नौ तरुषु स्वयम् । स्वामिना चक्रिरे कुम्भकारप्रमुखकारवः ॥ १६५ ॥
भरताय कला बाहुबलयेऽश्वादिलक्षणम् । सुन्दर्यै गणितं ब्राह्म्यै, लिपीरप्यादिशत् प्रभुः ॥ १६६ ॥

विधाय विधिवद् विश्वान्, विश्वनाथो नियोगिनः ।
अदैन्यानि च सैन्यानि, राज्यं प्राज्यमपालयत् ॥ १६७ ॥

निःशङ्का निर्विपत्पङ्का, निरातङ्का निरागसः । निरीतयः प्रजास्तस्मिन्, बभुर्वसुमतीपतौ ॥ १६८ ॥
सस्यान्यकृष्टपच्यानि, धेनवः कामधेनवः । विसृष्टवृष्टयः काले, जलदाः फलदा द्रुमाः ॥ १६९ ॥
राजन्वत्यां तदा तेन, भुवनस्वामिनाऽवनौ । जातः शूरोऽपि न क्रूरकराक्रान्तिकृतौ कृती ॥ १७० ॥
आज्ञामात्रे धरित्रीशान्, कुर्वत्यस्य वशंवदान् । स्मरो यदि सस्मार, केवलं चापचापलम् ॥ १७१ ॥
इत्थं त्रिवर्गसंसर्गसुभगम्भावुकाः प्रजाः । त्रिषष्टिः पूर्वलक्षाणां, जज्ञे पालयतः प्रभोः ॥ १७२ ॥
अन्यदा शिशिराक्रान्तं, जगदानन्दयन्नयम् । वसन्तर्तुर्जगद्भर्तुः, सेवां कर्तुमिवाययौ ॥ १७३ ॥
मधुर्विधाय वासन्तीं, पुष्पाभरणभूषिताम् । चक्षुर्दोषभियाऽकार्षीदलिकज्जलमञ्जुलाम् ॥ १७४ ॥
सहकारं सहुङ्कारं, किल कोकिलकूजितैः । पथिकाः पथि कामस्य, मृत्यं मृत्युममन्यत ॥ १७५ ॥
कन्दर्पो दर्पवानाज्ञाभङ्गवध्यान् वियोगिनः । पश्यत्यन्तर्वणं कुर्वन्नुच्चैश्चम्पकदीपकान् ॥ १७६ ॥
सारो मधुरसैरन्तरुद्भिन्नमधुभाण्डवत् । मधुपानां कलकलैर्व्याकुलो बकुलोऽभवत् ॥ १७७ ॥
पुष्पोल्लासैः सहासेव, सगीतेवालिनिःस्वनैः । वधूरिव मधून्मत्ता, वनलक्ष्मीरलक्ष्यत ॥ १७८ ॥
हल्लीसकलयाद् वल्लीर्वेल्लत्पल्लवपाणिभिः । अनीनटन्नटाचार्यकल्या मलयानिलः ॥ १७९ ॥
तदोत्कण्ठितचेतोभिः, प्रेरितो भरतादिभिः । जगाम जनितानन्दं, नन्दनं नाभिनन्दनः ॥ १८० ॥
पिकीनां पञ्चमोच्चारैर्भृङ्गीसङ्गीतनिःस्वनैः । असमैः कुसुमैर्भर्तुर्वनश्रीः स्वागतं व्यधात् ॥ १८१ ॥
पुष्पवेश्मकृतावासे, पुष्पभूषणभूषिते । तत्र पुष्पासनासीने, पुष्पमास इव प्रभौ ॥ १८२ ॥

यशोभिर्वासिते विश्वे, विश्वतः स्वामिनाऽमुना ।
किमेतैरिति पुष्पाणि, चिन्वन्ति स्म विलासिनः ॥ १८३ ॥ युग्मम् ॥

असमप्रपञ्चं पञ्चेषोरन्यन्नहि सहामहे । इतीव पुष्पावचयं, रचयन्ति स्म सुभ्रुवः ॥ १८४ ॥
कोऽपि प्रियास्तनस्तम्बे, स्तम्बेरममिव स्मरम् । बबन्ध निदधत्पुष्पमालामालानसन्निभाम् ॥ १८५ ॥
प्रियोपनीतं सावज्ञं, श्वासैर्भून्मास्म भस्मसात् । इतीव कुसुमं कान्ता, नासिकान्तादपातयत् ॥ १८६ ॥

पाणिः पुष्पाणि चिन्वत्याः, कस्याश्चित् कोमलाङ्गुलिः ।
उच्चैश्चुचुम्बे रोलम्बकुटुम्बैरम्बुजभ्रमात् ॥ १८७ ॥

कपोलेऽताडयत् काचिद्धवपल्लवपाणिना । अशोकः पादघातस्य, कृतमतिकृतौ कृती ॥ १८८ ॥
लताभ्यः पुष्पसर्वस्वं, हृत्वा यात्यङ्गनाजने । स्वनन्तोऽनुपदीभूता, भृङ्गास्तदुपजीविनः ॥ १८९ ॥
पञ्चवर्णसुमस्तोमसर्वाङ्गीणविभूषणाः । विरेजुर्जङ्गमाः कामशस्त्रशाला इव स्त्रियः ॥ १९० ॥
सुस्थितैर्मिथुनैरित्थं, परितः परिवारितः । बभौ त्रिभुवनस्वामी, तदाऽनङ्ग इवाङ्गवान् ॥ १९१ ॥
अथैकतः कृतोत्ताल्वाद्यैर्नादानुगामिभिः । मृदङ्ग-पणवा-ऽऽतोद्य-वेणु-वीणादिनिःस्वनैः ॥ १९२ ॥

---

१ भूरः करक्रान्तार्ह' संता० ॥ २ 'प्रमंसत संता० पाता० ॥ ३ 'स्मानानु' संता० ॥

कीर्णकर्णसुधावर्षं, यति-मान-लयान्वितम् । भावहस्तक-दृक्चारी, चारुनृत्तमनोहरम् ॥ १९३ ॥
ग्राम-रागोज्ज्वलस्फीतगीतप्रीतजगज्जनम् । सङ्गीतकं प्रभुस्तत्र, प्रीत्याऽत्यर्थं कृतार्थयन् ॥ १९४ ॥
अन्यतः प्रमदोद्दामप्रमदाजनचर्चरीः । परतः पौरलोकानामापानकमहोत्सवम् ॥ १९५ ॥
अपरत्रापि लोलाक्षीर्दोलान्दोलनखेलिनीः ।
पश्यन् प्रमुदितः स्वामी, चिन्तयामासिवानिति ॥ १९६ ॥ पञ्चभिः कुलकम् ॥
किं कदाऽपि मया क्वापि, सुखमीदृक्षमीक्षितम् ? । ददृशे विमृशन्नेवमवधिज्ञानतः प्रभुः ॥ १९७ ॥
आत्मनैवानुभूतं यत्, पुरा वैषयिकं सुखम् । अनुत्तरविमानान्तस्त्रिदिवेषूत्तरोत्तरम् ॥ १९८ ॥ युग्मम् ॥
विभुर्विभावयामास, स्वभावं भविनां ततः । जानन्तोऽपि हि मोहेन, जीयन्ते हन्त ! जन्तवः ॥ १९९ ॥
यदनन्तभवाभ्यस्तं, सुखं विषयसम्भवम् । अपूर्वमिव मन्यन्ते, बुभुक्षव इवाशनम् ॥ २०० ॥
दुःखहेतुषु तत्त्वेन, सुखेच्छा विषयेषु या । साऽपि मोहस्य माहात्म्यं, सुधाबुद्धिर्विषेष्विव ॥ २०१ ॥
अर्थ्यमानोऽपि नोपैति, नोपेतोऽप्यवतिष्ठते । स्थितोऽपि न सुखं दत्ते, मत्तेभो विषयव्रजः ॥ २०२ ॥
मल-मूत्रादिपात्रेषु, गात्रेषु मनुजन्मनाम् । सचेतसामसावस्तु, वस्तुतः कैव काम्यता ॥ २०३ ॥
अस्थिखण्डेषु दन्तेषु, कुन्दसुन्दरतामतिम् । मलक्षेत्रेषु नेत्रेषु, नीलोत्पलदलभ्रमम् ॥ २०४ ॥
श्लेष्मादिदोषवृक्षाणां, कानने वनितानने । सुधांशुबुद्धिं बध्नन्ति, धिगमी मोहमोहिताः ॥ २०५ ॥
॥ युग्मम् ॥
किञ्चात्र चक्रि-शक्राद्यैरप्यनाक्रान्तविक्रमे । नित्यमत्यन्तमुद्युक्ते, मृत्यौ स्वैरिणि वैरिणि ॥ २०६ ॥
जरायां रूपसर्वस्वहरायामस्खलद्गतौ । यौवनं वनवद् भस्मीकुर्वत्यां पलितच्छलात् ॥ २०७ ॥
अशेषसुखसन्तानकाननाशनिसन्निभे । विविधव्याधिसम्बन्धे, बाधामाधातुमुद्धते ॥ २०८ ॥
विभवे विघ्नसङ्घातघातसम्पातकातरे । उत्पातवातनिर्धूतपताकाञ्चलचञ्चले ॥ २०९ ॥
संसारचारकक्षिप्तो, महामोहतमोहतः । ध्वस्तालोकः कथं लोकः, क्रीडारसवशंवदः ? ॥ २१० ॥
॥ पञ्चभिः कुलकम् ॥
ततः संसारकारान्तर्निवासं प्रति सम्प्रति । विरज्य युज्यते मुक्तेरध्वन्यध्वन्यतैव मे ॥ २११ ॥
तदा पदान्तिकप्राप्तैरथ लोकान्तिकैः सुरैः । समयज्ञोऽपि कल्पत्वैर्व्यज्ञप्यत जगत्पतिः ॥ २१२ ॥
राज्यवत् प्रथमं नाथ !, धर्मतीर्थं प्रवर्तय । कृतिन् ! कृत्यं जगज्जन्तुहितस्मर ! जितस्मर ! ॥ २१३ ॥
इति विज्ञप्य यातेषु, तदा तेषु जगत्पतिः । आनन्दी नन्दनोद्यानात्, सदःसदनमासदत् ॥ २१४ ॥
अथाकार्य तदा हर्षभरतो भरतं सुतम् । समं समस्तसामन्त-बाहुबल्यादिनन्दनैः ॥ २१५ ॥
आदिदेश विभुर्वत्स !, भव राज्यधुरन्धरः । भावयन्तो वयं तोषं, महीष्यामो हि संयमम् ॥ २१६ ॥
विचक्षणः क्षणं वीक्ष्य, विभोर्मुखमवोचत । सादरं भरतः स्वामिसेवारम्भरतस्ततः ॥ २१७ ॥
त्वदग्रे गच्छतः क्षोणिपरागैरङ्गसङ्गिभिः । प्रथते मे यथाऽऽनन्दश्चन्दनैरपि नो तथा ॥ २१८ ॥
प्रीता नित्यं भवत्पादसेवासुखसुधारसैः । स्वामिन् ! साम्राज्यभोगाय, रमते न मतिर्मम ॥ २१९ ॥
जगदे जगदेकाधिनाथेनाथेदमङ्गज. । वत्स ! सेवा पितुः सेयमाज्ञाऽत्रजायते न यत् ॥ २२० ॥
अङ्गजा अपि ये गुर्वाज्ञां तेऽत्र नन्दनाः । अन्ये तु स्नेहभाजोऽपि, त्याज्या एव मला इव ॥ २२१ ॥

१ 'नृत्यम' संता० ॥ २ 'नात्तत्रिदि' पाता० ॥

एकदेहविनिर्माणादधमर्णीकृतैः सुतैः । यशो-धर्ममयं देहद्वयं पित्रोर्वितीर्यते ॥ २२२ ॥
श्रुत्वा सुरा-ऽसुरैर्मान्यामाज्ञामिति जगत्पतेः । न्यग्मुखो भरतस्तस्थावदत्तपुनरुत्तरः ॥ २२३ ॥
हृष्टाः स्वामिसमादिष्टाः, सचिवास्तदनन्तरम् । भरतं परतन्त्रेच्छमभ्यषिञ्चन् पितुः पदे ॥ २२४ ॥
तद्बाहुबलिमुख्यानामपि बाहुबलस्पृशाम् । विभुर्विभज्य भूभागान्, नन्दनानां तदा ददौ ॥ २२५ ॥
ततश्च वार्षिकं दानं, निदानं पुण्यसम्पदाम् । प्रभुः प्रवर्तयामास, वित्तैर्वित्तेशपूरितैः ॥ २२६ ॥

अष्टलक्षाधिकां तत्र, कोटिमेकां च काञ्चनीम् ।
प्रातः प्रारभ्य मध्याह्नं, यावद् देवोऽन्वहं ददौ ॥ २२७ ॥

भागेऽह्नः पश्चिमे चैत्रश्यामाष्टम्यामथ प्रभुः । चन्द्रमस्युत्तराषाढाभाजि भेजे व्रतोद्यमम् ॥ २२८ ॥
व्रताय विपिने गन्तुमथ प्रथमपार्थिवः । याप्ययानं समारोहन्मोहराजपराजयी ॥ २२९ ॥
शिबिकासविकासान्तःश्रद्धावन्धोद्धुरैर्नरैः । ऊढा प्रौढैश्च गीर्वाणैर्दासवद् वासवादिभिः ॥ २३० ॥
विश्वैरातोद्यनिर्घोषैर्नृणां जयजयस्वनैः । सिंहनादैर्दिविषदां, मागधध्वनिवर्द्धितैः ॥ २३१ ॥
शब्दाद्वैतमयीं कुर्वन्नुर्वीमुर्वीं वहन् मुदम् । विभुर्जम्भारि-रम्भादिनृत्ते दत्तेक्षणः क्षणम् ॥ २३२ ॥
पूर्द्दशो भृङ्गयनङ्गे, जितचम्पकसम्पदि । भरताद्यैः समं स्वामी, सिद्धार्थवनमागमत् ॥ २३३ ॥
॥ विशेषकम् ॥

शिबिकायास्ततोत्तीर्य, किङ्किल्लितले द्रुतम् । स्वयं जगदलङ्कारोऽलङ्कारानत्यजद् विभुः ॥ २३४ ॥
शक्रः स्कन्धेऽथ देवस्य, देवदूष्यं न्यवेशयत् । निर्मलं केवलज्ञानाप्रस्थानमिव मूर्तिमत् ॥ २३५ ॥
तीर्थङ्करः कराम्भोजे, भृङ्गतां बिभ्रतः क्षणम् । मूर्ध्नश्चतसृभिः केशानुदखानाथ मुष्टिभिः ॥ २३६ ॥
केशाः सुवर्णवर्णेऽङ्गे, सन्तु नीलमणिश्रियः । इत्युक्तः पञ्चमीं मुष्टिमसुचन्नमुचिद्विषा ॥ २३७ ॥
लज्जया मज्जयन्नीलरत्नानि क्षीरनीरधौ । शक्रेणाथ तदक्षेपि, केशमुष्टिचतुष्टयम् ॥ २३८ ॥
आगत्याथ द्युनाथेन, तुमुले मुकुलीकृते । कृताष्टमतपाः स्वामी, कृत्वा सिद्धनमस्कृतिम् ॥ २३९ ॥
सर्वसावद्ययोगानां, प्रत्याख्यानमुदीरयन् । भवाब्धिपोतश्चारित्रं, तदाऽरित्रमिवासदत् ॥ २४० ॥
नारकाणामपि प्रीतिस्फीतं विरचयन् मनः । तन्मनःपर्ययज्ञानमुपेदे त्रिजगत्पतेः ॥ २४१ ॥
चतुःसहस्रसङ्ख्यैश्च, समं भर्त्रा समन्ततः । भूपैः कच्छ-महाकच्छमुख्यैर्दीक्षां तदाऽऽददे ॥ २४२ ॥
स्तुत्वा नत्वा च यातेषु, सुतेषु त्रिदशेषु च । विहर्तुमिह मौनेन, स भूचक्रे प्रचक्रमे ॥ २४३ ॥

प्रभुणा भ्रमता भिक्षा, प्रापि न क्वापि पारणे ।
भिक्षानभिज्ञः स्वर्णादि, तदा लोको ह्यढौकयत् ॥ २४४ ॥

यां निर्वास्य चिरस्यापि, वसन्तीं जनवेश्मसु । यः श्रियं वासयामास, सा भिक्षा किमुपैतु तम् ? ॥ २४५ ॥

तथाऽप्यनार्तः क्षुत्तृष्णाद्यार्तैः कच्छादिभिः प्रभुः ।
आलोच्यामोचि तस्थे च, गङ्गाप्रस्थे फलाशिभिः ॥ २४६ ॥

अथ कच्छ-महाकच्छसुतौ पूर्वं नियोजितौ । तदा नमि-विनम्याख्यौ, पित्रोः पादान्तमीयतुः ॥२४७॥
अथैतौ प्रेषितौ ताभ्यां, सेवितुं भरतं प्रभुम् । ऊचतुश्चतुरं साभिमानमानसविक्रमौ ॥ २४८ ॥

१ कङ्कि° संता० पाता० ॥ २ चीर्णाष्ट° संता० पाता० ॥ ३ °च्याथोऽव्रतस्थे पाता० ॥
४ °रतप्रभुम् संता० पाता० ॥

विभुं विहाय नाभेयं, नावां सेवावहे परम् । को हि रोहणमासाद्य, प्रपद्येतापरं गिरिम् ? ॥ २४९ ॥
इति प्रतिज्ञामाधाय, प्रणिपत्य पितृक्रमान् । प्रभुं गत्वा च नत्वा च, तौ व्यजिज्ञपतामिति ॥ २५० ॥

क्षेत्रमात्र्यपि किं तात !, भागोऽस्माकं न भूरभूत् ? ।
विज्ञप्तोऽपीति नैताभ्यां, वाचं वाचंयमो ददौ ॥ २५१ ॥

व्यधत्तामतिभक्त्या तावप्यवक्तरि भर्तरि । सेवामेवान्वहं के वा, हेवाकं मोक्तुमीशते ? ॥ २५२ ॥
बभौ विभुः स्थितो मध्ये, स तत्पाणिकृपाणयोः । परास्तयोरिव शिवपुरद्वारकपाटयोः ॥ २५३ ॥
अपरेद्युः परश्रद्धाधरणो धरणोरगः । अपश्यन्नमि-विनमी, सेवको विनमन् जिनम् ॥ २५४ ॥
कौ युवां ? संश्रितौ किं वा, मौनध्यानघनं जिनम् ? । कर्ता किमर्थः कार्ये वामित्युक्तौ भोगिभूभुजा ॥२५५॥
तावूचतुश्चतुर्बाहुविक्रमौ भोगिनां विभुम् । सेवैव सेवकैः कार्या, चिन्ता किं तादृशी प्रभोः ? ॥ २५६ ॥
॥ युग्मम् ॥

एतस्य मौनयुक्तस्य, धनमुक्तस्य सेवया । यद् भवेत् तेन नो कार्यमेकः सेव्यो हि मानिनाम् ॥ २५७ ॥
सेविते तत् किमन्यत्र, निर्धनेऽप्यत्र यत् फलम् ? । दीपे क तज्जगद्दीपे, मेघच्छन्नेऽपि यन्महः ? ॥ २५८ ॥
तयोः फणिपतिः प्रीतः, प्रज्ञप्तिप्रमुखां ददौ । पाठसंसिद्धविद्याष्टचत्वारिंशत्सहस्रिकाम् ॥ २५९ ॥
विद्याः किलैता वैताढ्यमेखलादक्षिणोत्तरे । प्रभावं प्रथयिष्यन्ति, भवतोरित्युवाच च ॥ २६० ॥
प्रभुप्रभावसम्प्राप्तविद्यौ ह्यौजसाविमौ । गतौ वैताढ्यमावेद्य, पितृभ्यां भरताय च ॥ २६१ ॥
वर्षं वसुन्धराहारो, निराहारोऽप्यथ प्रभुः । भ्रमन् बहुषु देशेषु, क्षुधाक्षामीकृताकृतिः ॥ २६२ ॥
अवधिज्ञानतो ज्ञात्वा, तदा पारणकारणम् । पुरं गजपुरं प्राप, द्विपस्तत्र इवांह्रिपम् ॥ २६३ ॥
॥ युग्मम् ॥

तत्र बाहुबलेः पौत्रः, स्वप्ने सोमप्रभात्मभूः । श्रेयांसो धूसरं मेरुं, क्षीरैरक्षालयत् तदा ॥ २६४ ॥
प्रापि सोमप्रभेणापि, स्वप्नः किल महाभटः । रिपुभ्योऽमोचि रोचिष्णुः, श्रेयांसेनाद्भुतश्रिया ॥ २६५ ॥
अदर्शि भास्करः स्वप्ने, श्रेष्ठिनाऽपि सुबुद्धिना । अतिभास्वान् किल भ्रष्टैः, करैः श्रेयांसयोजितैः ॥ २६६ ॥
विचाराय प्रगे सोमप्रभक्ष्मापसभान्तरे । स्वप्नार्थं तेष्वजानत्सु, मिलितेषु समन्ततः ॥ २६७ ॥
पुरं त्रिभुवनस्वामी, व्योमदेशमिवांशुमान् । विहर्तुं प्रविवेशाथ, धिष्ण्याद्धिष्ण्यान्तरं चरन् ॥ २६८ ॥
अगृह्णति जिने भिक्षां, हस्त्यश्व-वसनादिकाम् । लोलाः कोलाहलं चक्रुः, प्रजाः सायंप्रजा इव ॥ २६९ ॥
प्रेषितस्तुमुलं ज्ञातुं, प्रत्यागत्य व्यजिज्ञपत् । प्रतिहारः कुमाराय, वेगादागमनं प्रभोः ॥ २७० ॥
नापदन्तापद्रायिन्यः, प्रभवन्ति प्रभोः पुरः । श्रेयांस इति निर्मुक्तच्छत्रोपानदुपागमत् ॥ २७१ ॥
प्रमस्कन्प्रभुः सोऽथ, किङ्कर्तव्यविमूढधीः । श्रेयांसः शिश्रिये जातिस्मृत्याऽब्धिरिव वेलया ॥ २७२ ॥
पूर्वं पूर्वविदेहेषु, वज्रसेनजिनाङ्गजः । चक्रनामोऽभवच्चक्री, सोऽहमेतस्य सारथिः ॥ २७३ ॥
महाव्रतं मया साकमीदृग्मुद्रामृतस्तदा । पार्श्वे पितुरवापायमनपायसुखेच्छया ॥ २७४ ॥
वज्रसेनजिनेन्द्रेण, तदाऽऽदिष्टमिति स्वयम् । भविता वज्रनाभोऽयं, भरते प्रथमो जिनः ॥ २७५ ॥
तदयं स दयाराशिः, पयोराशिगभीरिमा । दिष्ट्या दृष्ट्या मया दृष्टश्चकोरेणेव चन्द्रमाः ॥ २७६ ॥
निश्चित्येदं तदा जानन्, भिक्षाकल्पमनल्पधीः । ददाविक्षुरसं भर्तुः, श्रेयांसस्तत्क्षणागतम् ॥ २७७ ॥

---

१ 'प्रभुः इमा' श्रेयः° पत्रसं° ॥ २ 'वज्रनाभजः' संता° ॥

प्रभुणा पाणिपात्रेण, साक्षादिक्षुरसो धृतः । आरूढः शिखया व्योम, जेतुमिन्दुकरानिव ॥ २७८ ॥
तदा ददत् कुमारोऽयं, मुदा रोमाञ्चमेचकः । बभौ मुक्तिश्रिया साक्षात्, कटाक्षैरिव वीक्षितः ॥ २७९ ॥
पुण्यैरिव कुमारस्य, दिवमिक्षुरसैर्गतैः । उत्सवाय समाहूताः, पुरुहूतादयः सुराः ॥ २८० ॥
हतदुन्दुभयो रत्न-पुष्प-गन्धोदकादिम् । विधाय भूतले देवाश्चेलोत्क्षेपमथ व्यधुः ॥ २८१ ॥
प्रभोः शुक्लतृतीयायां, वैशाखेऽजनि पारणम् । तदक्षयतृतीयाख्यं, पर्व सर्वत्र विश्रुतम् ॥ २८२ ॥
किमेतदिति सोत्कर्षं, पृच्छते स्वच्छचेतसे । राज्ञे प्राज्ञेन विज्ञप्तं, प्राग्वृत्तं तेन सूनुना ॥ २८३ ॥

कल्प्या-ऽकल्प्यविचारं च, आतजातिस्मृतिः कृती ।
अपशोकाय लोकाय, श्रेयांसः श्रेयसेऽदिशत् ॥ २८४ ॥

नाथपारणकेनाथ, कुमारजनितेन ते । स्वप्नाः स्पष्टार्थतां प्रापुस्त्रयेऽपि पुरुषत्रये ॥ २८५ ॥
अथ प्रभौ गते पापवारणे कृतपारणे । चकार पारणस्थाने, रत्नपीठं नृपाङ्गजः ॥ २८६ ॥

एतदादिकृतः पीठमिति लोकाय सोऽवदत् ।
जनोऽपि जिनभिक्षायाः, स्थाने तत् तादृशं व्यधात् ॥ २८७ ॥

तदादि त्यक्ततत्त्वेन, तदाऽऽदित्यस्य मण्डलम् । जनेनाजानताऽद्यापि, नित्यं कृत्वाऽपि पूज्यते ॥ २८८ ॥
नाथोऽन्यदा विहारेण, दक्षस्तक्षशिलां पुरीम् । सायं बाहुबलेः प्राप, बहलीदेशमण्डनम् ॥ २८९ ॥
ज्ञात्वा तमागतं बाहुबलिश्चक्रे पुरोत्सवम् । पादारविन्दं वन्दिष्ये, सुप्रातेऽहं प्रभोरिति ॥ २९० ॥
अथाह्नेनातिरम्येण, भूषणान्यपि भूषयन् । समं समन्तात् सामन्तैः, प्रातरानन्दमेदुरः ॥ २९१ ॥
यावत् पुरन्दरप्रायः, पश्यन् शृङ्गारितां पुरीम् । भगवान् विषयत्रासी, यत्रासीत् तत्र यातवान् ॥ २९२ ॥
॥ युग्मम् ॥

विजहारान्यतस्तावत्, प्रभञ्जन इव प्रभुः । तद्दुःखितं नृपं प्राह, सचिवः शुचिवागथ ॥ २९३ ॥
हृद्ये करोति हृद्येव, देवस्तव सदा पदम् । मा विषादनिषादस्य, सुखदस्योर्वशो भव ॥ २९४ ॥
पदानि पद्म-कुलिशा-ऽङ्कुशाङ्कानि जगद्गुरोः । एतानि तानि भूखण्डमण्डनानि नमस्कुरु ॥ २९५ ॥
सचिवस्य वचः श्रुत्वा, तथेति पृथिवीपतिः । धर्मचक्रमिह त्रुट्यत्कर्मचक्रः प्रचक्रमे ॥ २९६ ॥
नभोरत्नसपत्नोरुरत्नराजिविराजितम् । तद् विधाय व्यधादेष, स्पष्टामष्टाह्निकामिह ॥ २९७ ॥
अष्टयोजनविस्तीर्णे, चक्रेऽस्मिन् योजनोन्नते । सहस्रारे सहस्राणि, यामिकानां नृपोऽमुचत् ॥ २९८ ॥
ततश्च भगवान् भास्वाँस्तमःशमनकर्मठः । विहरन् म्लेच्छदेशेषु, पङ्कशोषमशोषयत् ॥ २९९ ॥
अथ वर्षसहस्रान्ते, घस्रान्त इव चन्द्रमाः । पुरं पुरिमतालाख्यं, प्राचीमुखमिवागमत् ॥ ३०० ॥

अयोध्याया महापुर्यास्तस्मिन् शाखापुरे स्थितः ।
फाल्गुने मासि कृष्णायां, प्रभुरेकादशीतिथौ ॥ ३०१ ॥

तदानीमुत्तराषाढावस्थिते सितदीधितौ । अवाप केवलज्ञानं, शुक्लध्यानधनो जिनः ॥ ३०२ ॥
ततश्चासनकम्पेन, समीयुस्तत्र वासवाः । अथाकारि चमत्कारि, त्रिदशैर्देशनासदः ॥ ३०३ ॥

---

१ रसं ददं खंता० ॥ २ °नेन ज्ञा° पातसं० विना ॥ ३ पुरम् पाता० ॥ ४ °षु, पापपङ्कमदोषयत् खंता० । °षु, कर्मपङ्कमशोषयत् पाता० ॥

प्रविश्य पूर्वद्वारेण, नत्वा तीर्थं च तीर्थकृत् । सिंहासनमलङ्कुर्के, दक्षिणः सप्रदक्षिणम् ॥ ३०४ ॥
यथास्थानं निविष्टेषु, सभालोकेषु वासवः । गत्वाऽन्तरुत्तरद्वारा, चकार त्रिः प्रदक्षिणम् ॥ ३०५ ॥
अथ स्तुत्वा नमस्कृत्य, कृतकृत्यः सुरेश्वरः । प्रभोरुपासनाहेतोरासन्नासनमासदत् ॥ ३०६ ॥
इतश्च भरतो भक्तिभरतो मातरं पितुः । तदाऽगमन्नमस्कर्तुं, स्वकुलस्येव देवताम् ॥ ३०७ ॥
तां च पुत्रवियोगेन, श्रवदश्रुपयःप्लवैः । उन्मीलन्नीलिकालुप्तदर्शनां जननीं प्रभोः ॥ ३०८ ॥

पौत्रो ज्यायानयं मातः !, नमति त्वत्पदाम्बुजम् ।
विज्ञप्यैवं नमस्कृत्य, भरतः पुरतोऽभवत् ॥ ३०९ ॥ युग्मम् ॥

अथ पुत्रप्रवासेन, समं प्रोषितसम्मदा । उच्छलच्छोककल्लोलकुल्यया साऽवदद् गिरा ॥ ३१० ॥
वत्स ! स्वच्छन्दमानन्दमेदुरां त्वं श्रितः श्रियम् । मदीयः पुत्रको गात्रमात्रस्तु वनवास्यभूत् ॥ ३११ ॥
शरीरं सुकुमारं तद्, यत् तेन तपसोऽर्पितम् । रम्भास्तम्भो गृहस्थूणास्थाने तद् विनिवेशितः ॥ ३१२ ॥
क तास्तस्य सुरस्त्रीणामास्पदं सुखसम्पदः ? । केदानीं शीत-वातादिपुष्टा कष्टपरम्परा ? ॥ ३१३ ॥
नैवासनं न वसनं, न गृहं न परिच्छदम् । अवगच्छामि वत्सस्य, जीवाम्यद्यापि पापिनी ॥ ३१४ ॥
तामित्थमथ शोचन्तीमस्रुधर्न्तीं कदाग्रहम् । अभ्यधाद् भरतो मातस्तातस्य त्वं जनन्यसि ॥ ३१५ ॥
विज्ञाऽपि किमविज्ञेव, सुतवात्सल्यमोहिता । विचिन्तयसि तातेऽपि, मातर् ! मानवमात्रताम् ? ॥ ३१६ ॥

स हित्वा लौकिकीं लक्ष्मीं, लिप्सुर्लोकोत्तरां श्रियम् ।
यद् विधत्तेऽधुना मातः !, फलं त्वं तस्य पश्यसि ॥ ३१७ ॥

इत्यामिति समाश्वास्य, यावत्सुधां वसुधाभुजः । मरुदेवाऽभवद् यावन्निर्विषादविपोदया ॥ ३१८ ॥
ज्ञापितौ वेत्रिणा तावत्, पुरुषौ द्वौ समीयतुः । तयोराद्योऽवदन्नाम्ना, यमको घटिताञ्जलिः ॥ ३१९ ॥
दिष्ट्याऽद्य वर्धसे देव !, कानने शकटानने । उत्पेदे केवलज्ञानं, युगादिजगदीशितुः ॥ ३२० ॥
व्यजिज्ञपद् द्वितीयोऽथ, ख्यातः शमकसंज्ञया । आविरासीत् प्रभो ! चक्ररत्नमद्यास्त्रमन्दिरे ॥ ३२१ ॥
महःसहजमाहात्म्यविध्वस्तात्मविरोधिनः । पूर्वं प्रभोर्वा कुर्वेऽहमर्चां चक्रस्य वा स्वयम् ? ॥ ३२२ ॥
क वा जगत्त्रयत्राता, तातः शातितकल्मषः ? । क चैनसां निधिश्चक्रं, भुवनैकभयङ्करम् ? ॥ ३२३ ॥
पारितोषिकदानेन, विसृज्य मुदितौ च तौ । मरुदेवामुवाचैवं, भरतो हर्षनिर्भरः ॥ ३२४ ॥
॥ विशेषकम् ॥

मातः ! सुतवियोगेन, त्वं सदा दुःखतः पुरा । रूक्षाक्षरं समादिक्षः, परं पश्य सुतश्रियम् ॥ ३२५ ॥
पितामहीं महीनाथस्तदेत्युक्त्वाऽधिरोप्य च । कुञ्जरे स्वयमारोहत्, कृतकौतुकमङ्गलः ॥ ३२६ ॥
अथ व्रजन् गजारूढो, मरुदेवीमुवाच सः । मातराकर्ण्यतामेतत्, पुंश्रव्य विभुताद्भुतम् ॥ ३२७ ॥
रूप्य-कल्याण-माणिक्यमयवप्रत्रयावृतम् । देशनासदनं चक्रुः, शक्रादेशेन नाकिनः ॥ ३२८ ॥
अयं वृन्दारकैर्वन्दिवृन्दैरिव जयध्वनिः । त्वत्सुतस्य पुरो मातः !, क्रियमाणो विभाव्यते ॥ ३२९ ॥
अयमम्भोधरध्वानगभीरो दुन्दुभिध्वनिः । मातस्तनोति सोत्सेकाः, केकाः काननकेकिनाम् ॥ ३३० ॥
श्रुत्वेति मरुदेवाम्बाऽऽनन्दाश्रुवारिभिः । नेत्रयोर्नीलिकातङ्कपङ्कः प्रक्षालितः क्षणात् ॥ ३३१ ॥

---

१ 'यादाम' संपा० ॥ २ 'श्रुती क' वा० ॥ ३ द्युर्यनु: संपा० पाता० ॥ ४ शान्तित' वा० ॥ ५ व्यापेनि प्रदिशतेन संपा० ॥ ६ 'स्तनिर्यु' वा० वा० ॥ ७ सुतस्य संपा० ॥

स्वयमेवाथ पश्यन्त्यास्तस्यास्तद् वैभवं विभोः । विलीनं मनसा सद्यः, परानन्दामृतद्रवैः ॥ ३३२ ॥
तदैव केवलज्ञानं, तस्याः प्रादुरभूत् ततः । प्राप्येव तपसा मातुः, प्रभुणा प्राभृतीकृतम् ॥ ३३३ ॥
अन्तकृत्केवलीभूय, लोकान्तमथ साऽगमत् । मन्ये मुक्तिपुरद्वारमपवारयितुं पुरः ॥ ३३४ ॥
अस्यामस्यावसर्पिण्यां, प्राच्यसिद्धस्य तद् वपुः । त्रिदशैर्निदधे तूर्णं, सत्कृत्य क्षीरनीरधौ ॥ ३३५ ॥
ततः प्रभृति लोकेषु, वृत्तं मृतकपूजनम् । सर्वो हि दर्शितां पूर्वैर्वर्तनीमनुवर्तते ॥ ३३६ ॥

व्याप्तोऽथ हर्ष-शोकाभ्यां, बद्धस्पर्धं धराधवः ।
निशां प्रान्त इव ध्वान्त-प्रकाशाभ्यामभूत् समम् ॥ ३३७ ॥

पञ्चभिर्विमुक्तच्छत्रादिर्दूरादूरीकृताञ्जलिः । देशनासदनस्यान्तः, प्रविवेश विशांपतिः ॥ ३३८ ॥
त्रिश्च प्रदक्षिणीकृत्य, नमस्कृत्य जगद्गुरुम् । यथास्थानं निविष्टोऽथ, प्रहृष्टो भरतेश्वरः ॥ ३३९ ॥
अथाऽऽयोजनगामिन्या, सर्वभाषानुरूपया । गिरा जगद्गुरुस्तत्र, विदधे धर्मदेशनाम् ॥ ३४० ॥
असावसारसंसारवनसेचनसारणिः । दूरेण युज्यते त्यक्तुं, मोहनिद्रा महात्मनाम् ॥ ३४१ ॥
मोहभिल्लेशपल्लीव, तदिदं भवकाननम् । पुण्यरत्नहरैः क्रूरैश्चौरै रागादिभिर्वृतम् ॥ ३४२ ॥
अनाविले कुले जन्म, दुर्लभेभ्योऽतिदुर्लभम् । चिन्तारत्नमिव प्राप्य, हार्यते किं मुधा बुधाः ! ॥ ३४३ ॥
यतध्वमपवर्गाय, तन्निर्विण्णा भवाद् यदि । स हि सर्वापदां पारमपारानन्दमन्दिरम् ॥ ३४४ ॥
प्राप्यते प्राणिभिर्नायं, धर्मस्याराधनां विना । किं कदापि क्वचिद् दृष्टस्तरुहीनः फलोद्गमः ? ॥ ३४५ ॥

तस्य सुश्रमणो वा स्यान्मूलोत्तरगुणोत्तरः ।
श्राद्धो वाऽऽराधकः सम्यक्, सम्यक्त्वी-ऽणुव्रतादिभृत् ॥ ३४६ ॥

एतौ मोक्षस्य पन्थानौ, मन्थानौ भववारिधेः । कामं श्रामण्य-गार्हस्थ्यधर्मौ शाश्वतशर्मदौ ॥ ३४७ ॥
यानि चक्रिपदादीनि, स्पृहणीयानि देहिनाम् । असौ कुसुमसम्पत्तिस्तस्य धर्ममहीरुहः ॥ ३४८ ॥
फलं तु परमानन्दरसनिःष्यन्दसुन्दरम् । महोदयमयं किञ्चिल्लोकोत्तरमनश्वरम् ॥ ३४९ ॥
श्रुत्वेति देशनां भर्तुर्भरतस्याङ्गजन्मभिः । शतैः पञ्चभिरानन्दात्नप्तृभिः सप्तभिः शतैः ॥ ३५० ॥
तथा सोदरया ब्राह्मया, परब्रह्मार्पितात्मभिः । तैस्तैर्ऋषभसेनाद्यैः, साग्रहैर्जगृहे व्रतम् ॥ ३५१ ॥
॥ युग्मम् ॥

दीक्षां तदाऽऽददे किञ्च, मरीचिश्चक्रिनन्दनः । सादरं सुन्दरी किन्तु, चक्रिणा वारिता व्रतात् ॥ ३५२ ॥

व्रतिनः पुण्डरीकाद्याः, साध्व्यो ब्राह्मीपुरःसराः ।
श्राद्धाः सोमारमज्रमुखाः, श्राविकाः सुन्दरीमुखाः ॥ ३५३ ॥

इत्थं चतुर्विधः सङ्घः, स्थापितः प्रभुणा तदा । पूज्यतेऽद्यापि विश्वेऽस्मिन्, देव-दानव-मानवैः ॥ ३५४ ॥
श्रीपुण्डरीकमुख्यानां, यतीशानां जगद्गुरुः । ततश्चतुरशीतेरप्यादिदेश पदत्रयीम् ॥ ३५५ ॥
तेऽप्युत्पाद-व्यय-ध्रौव्यरूपां प्राप्य पदत्रयीम् । वितेनुरद्भुतप्रज्ञा, द्वादशाङ्गानि लीलया ॥ ३५६ ॥
शक्रानीतैरथो दिव्यैस्तूर्णं चूर्णैर्जगत्प्रभुः । अनुयोग-गणानुज्ञे, यच्छंस्तानभ्यषिञ्चत ॥ ३५७ ॥
जातेऽथ पौरुषीकाले, सकलैर्निस्तुषाक्षतैः । कृतः समग्रत्याचारं, वलिः पूर्वदिशाऽविशद् ॥ ३५८ ॥

---

१ निद्रामा° खंता० ॥ २ अथ यो° खंता० ॥ ३ °भ्योऽपि दुर्ल° खंता० पाता० ॥
४ °श्रवणो वता० ॥ ५ °मुखादिम° वता० ॥

क्षिप्तः पुरः सुरैः सोऽर्धमर्धार्धं चक्रिणा पुनः । यथाविभागमन्यैश्च, जगृहे गृहमेधिभिः ॥ ३५९ ॥
अथ द्वितीयपौरुष्यां, देवच्छन्दं गते प्रभौ । पुण्डरीकमुनेर्व्याख्यां, श्रुत्वा जग्मुर्जना गृहान् ॥ ३६० ॥
सदा गोमुखयक्षेण, देव्या चाऽप्रतिचक्रया । अमुक्तसन्निधिः स्वामी, सर्वातिशयभाजनम् ॥ ३६१ ॥
पावनीमवनीं कुर्वन्, कोटिदैवतसेवितः । नानास्थानान्यथाकामन्, विजहारान्यतस्ततः ॥ ३६२ ॥
॥ युग्मम् ॥

इति ज्ञानोद्योतप्रशमितसमस्तान्तरतमाः,
क्रमात् क्रामन्नुर्वीतलेमतुललोकम्पृणगुणः ।
स्फुरन्मार्गालोकं सकलमपि लोकं विरचयन्,
विवस्वान् विभ्राज्ये कृतसुकृतलक्ष्मीं जिनपतिः ॥ ३६३ ॥

**॥ इति श्रीविजयसेनसूरिशिष्यश्रीमदुदयप्रभसूरिविरचिते श्रीधर्माभ्युदयनाम्नि श्रीसङ्घपतिचरिते लक्ष्म्यङ्के महाकाव्ये श्रीऋषभस्वामि-जन्म-व्रत-ज्ञानवर्णनो नाम तृतीयः सर्गः ॥**

या[3] श्रीः स्वयं जिनपतेः पदपद्मसद्मा, भालस्थले सपदि सङ्क्रमिते समेता ।
श्रीवस्तुपाल ! तव भालनिभालनेन, सा सेवकेषु सुपमुन्मुखतामुपैति ॥

॥ ग्रन्थाग्रम्[4] ३६८ । उभयम् ९४५ ॥

१ °सः पतन् सुरैः संता॰ पाता॰ ॥ २ °लतिलकलो° संता॰ ॥ ३ श्लोकोऽयं पाता॰ प्रतौ द्वितीयसर्गप्रान्ते वर्त्तते ॥ ४ ग्रन्थाग्रम् ३६५ । उभयं ९३३ ॥ इति पाता॰ ॥

# चतुर्थः सर्गः ।

इतश्च भरतश्चक्री, शस्त्रागारगतः स्वयम् । भक्त्या चक्रं नमश्चक्रे, क्षत्रप्रत्यक्षदैवतम् ॥ १ ॥
पूजां नित्यं वितन्वानो, नवनैवेद्यमेदुराम् । अष्टाह्निकोत्सवं चक्रे, तत्रैव निवसन्नसौ ॥ २ ॥
अथ प्रस्थानिके लग्ने, कृतप्रस्थानमङ्गलः । अनुचक्रं दिशि प्राच्यां, करिरत्नेन सोऽचलत् ॥ ३ ॥
छत्र-चर्मा-ऽश्व-सेनानी-खड्ग-दण्ड-पुरोधसः । कुटुम्बी मणि-काकिण्यौ, वर्धकिश्च नृपानुगः ॥ ४ ॥
चचाल रत्नस्तोमोऽयं, देवताकृतसन्निधिः । दिगन्तभूपतीनां तु, चकम्पे हृदयावनिः ॥ ५ ॥
॥ युग्मम् ॥
चेले समं ततस्तेन, सामन्तैश्च समन्ततः । सितांशुनेव नक्षत्रैः, स्फुरत्तेजोमयात्मभिः ॥ ६ ॥
तरङ्गैरिव पाथोधेस्तुरङ्गैर्वायुचञ्चलैः । चलितं कल्लितोत्साहैः, प्रतिकूलेऽप्यभङ्गुरैः ॥ ७ ॥
अथ प्रतस्थे वेगेन, हास्तिकं गर्जितोर्जितम् । प्रत्यर्थिक्षितिभृत्तेजोदाववारिदमण्डलम् ॥ ८ ॥
निजानाकारयन्तोऽथ, कारयन्तोऽरितर्जनम् । ध्वजाञ्चलैश्चलैश्चेलुः, समेनैव पथा रथाः ॥ ९ ॥
अनुचक्रं व्रजन्तीव, द्विगव्यूतिप्रयाणकैः । तीरे नीरेशितुः प्राप, पतिप्रीत्येव वाहिनी ॥ १० ॥
तत्र वर्धकिरत्नेन, निर्मितानमितश्रियः । आवासानावसन्ति स्म, सैनिकाः स्मेरविस्मयाः ॥ ११ ॥
चक्रे पौषधशालां च, विशालां रत्नशालिनीम् । वर्धकिर्वर्धितानन्दश्चक्रिणः पुण्यपुञ्जवत् ॥ १२ ॥
तस्यामुत्तीर्य सद्वीर्यः, कुञ्जराद् राजकुञ्जरः । प्रविवेश नभोदेशमिवार्कः पूर्वपर्वतात् ॥ १३ ॥
दर्भसन्दर्भनिष्पन्नस्तस्तरे स्रस्तपातकः । उपवासत्रयं चक्रे, तत्र वक्रेतराशयः ॥ १४ ॥
अथ प्रथितचातुर्यस्तुर्येऽह्नि महामहाः । सुगन्धिभिर्जलैः स्नातो, बली बलिविधिं व्यधात् ॥ १५ ॥
सर्वाण्यस्त्राण्युपादाय, शक्रदायादविक्रमः । अथारूढो रथं चक्री, गरुत्मन्तमिवाच्युतः ॥ १६ ॥
नाभेयभू रथं नाभिद्वयसे पयसि स्थिरम् । विरचय्य समुद्रान्तः, समुन्मुद्रितकार्मुकः ॥ १७ ॥
सौवर्णे विस्फुरद्वर्णे, नामाङ्कितमथो शरम् । पुङ्खमध्यमुखाधीशसुपर्णभुजगासुरम् ॥ १८ ॥
दिशि मागधतीर्थस्य, पत्युरत्युज्ज्वलाकृतिम् । क्ष्मापश्चिक्षेप साक्षेपं, विद्युद्दण्डमिवाम्बुदः ॥ १९ ॥
॥ विशेषकम् ॥
सभायां मागधेशस्य, पक्षसूत्कारदारुणः । स चेपुर्वेगसम्पन्नः, पन्नगारिरिवापतत् ॥ २० ॥
अथ भ्रकुटिभीमास्यः, स्फुरत्स्फुरदधरपल्लवः । बालार्कशोणदृक्कोणः, प्राह मागधतीर्थपः ॥ २१ ॥
जिघृक्षुः को हरेर्दंष्ट्रां[१], कः क्षेप्ता ज्वलने पदम् ? । भ्रान्तारघट्टचक्रारमध्ये कः कुरुते करम् ?॥ २२ ॥
क एष मयि निःशेषशस्त्रविस्तृतकौशले । अक्षिपन्मार्गणं मृत्युमार्गमार्गणदूतवत् ? ॥ २३ ॥
इत्युपस्थौ समं वीरैर्धीरैः कोपातिपाटलैः । स निस्त्रिंशैः स्फुरद्धूमैर्ज्वालावद्भिरिवानलः ॥ २४ ॥
अथ व्यालोकयामास, तन्मन्त्री तस्य पत्रिणः । अक्षराणि फले दूतजिह्वायामिव शुद्धधीः ॥ २५ ॥

१ 'दंष्ट्रां' संता० ॥

ऋषभस्यादिदेवस्य, सूनुर्भरतचक्रभृत् । इत्यादिशति वो दण्डं, दत्त राज्ये स्पृहा यदि ॥ २६ ॥
वर्णानिमानमात्येन्द्रः, प्रबलोऽप्यवलोक्य सः । मुमोच मदमुद्दामः, प्रेक्ष्य मन्त्रमिवोरगः ॥ २७ ॥
पतिं प्रति प्रतिज्ञातत्यागहेतोरदोऽवदत् । स्वामिन् ! विमुञ्च संरम्भमम्भःपतिरिव भ्रमे ॥ २८ ॥
असावसमशौटीर्यश्चक्री भूचक्रभूषणम् । भरतो भरतक्षेत्रपतिश्चिक्षेप सायकम् ॥ २९ ॥
एतस्य भागधेयानि, मागधेश ! विरेजिरे । प्रतिवासरवर्द्धीनि, स्पर्द्धीनि प्रथमेन्दुना ॥ ३० ॥
अनल्पोऽपि हि कल्पान्ते, क्षीयते क्षीरनीरधिः । सुपर्वपर्वतः सोऽपि, कम्पतेऽहर्पतिः पतेत् ॥ ३१ ॥
पोत्री धात्रीतलं मुञ्चेत्, पविश्छविमथ त्यजेत् । अभ्रमभ्रमसौ किन्तु, भजेन्नहि महाभुजः ॥ ३२ ॥
अस्मै षण्मेदिनीखण्डमण्डनाय महीभुजे । दण्डमुद्दण्डकोदण्डदोर्दण्डाय प्रयच्छ तत् ॥ ३३ ॥
निशम्य सम्यगित्येष, वचनं सचिवेशितुः । समं भुजाभृतां तत्या,' तत्याज परुषां रुषम् ॥ ३४ ॥
तत्काण्डदण्डं दण्डं च, समादाय समागतः । नत्वा श्रीभरतं वाचमित्युवाच स मागधः ॥ ३५ ॥
ममैव पुण्यनैपुण्यं, ममैव प्रगुणा गुणाः । तेजस्वी यस्य नाथस्त्वमम्भोजस्येव भास्करः ॥ ३६ ॥
अतः परं गतः पारं, सिन्धोरप्यस्मि ते वशः । जानीहि मां हिमांशुश्रीश्चकोरमिव सेवकम् ॥ ३७ ॥
तं विसृज्य प्रसन्नेन, रथोऽथ पृथिवीभुजा । जवादवास्यताम्भोधेः, संरम्भाश्च मनोरथः ॥ ३८ ॥
प्राप्तोऽथ क्ष्मापकोटीरः, कटकं जितकण्टकः । मागधाधीशमुद्दिश्य, स्पष्टामष्टाहिकां व्यधात् ॥ ३९ ॥
अथानुचक्रं चलिता, चक्रवर्तिचमूस्तदा । तटं जगाम सङ्ग्रामदक्षिणा दक्षिणोदधेः ॥ ४० ॥
वरदामाधिनाथोऽपि, तत्र मागधनाथवत् । विगृह्य जगृहे दण्डमखण्डं चक्रवर्तिना ॥ ४१ ॥
विहिताष्टाहिकस्तत्र, चक्रमार्गानुगः क्रमात् । विपश्चित् पश्चिमं प्रापत्, तीरं नीरनिधेरयम् ॥ ४२ ॥
प्रभासान्द्रः प्रभासेन्द्रं, जित्वा तत्रापि पूर्ववत् । चिन्तारत्न-शिरोरत्न-सुवर्णादीन्यदण्डयत् ॥ ४३ ॥
तत्कृताष्टाहिकः श्रीमाननुचक्रं चलद्बलः । ययौ चक्री महासिन्धुसिन्धोर्दक्षिणरोधसि ॥ ४४ ॥
पूर्ववत् पौषधागारे, विरचय्याष्टमं तपः । असावसाधयद् वेगादेव तां सिन्धुदेवताम् ॥ ४५ ॥
अथ सा नभसाऽभ्येत्य, रभसा भरतेश्वरम् । ऊचे तवाहं राजेन्द्रो !, किङ्करेव करोमि किम् ! ॥ ४६ ॥
अमो यथावदादाय, प्राभृतं सा भृतं श्रिया । जगाम चामरीभूतमुक्ताताडङ्कदीधितिः ॥ ४७ ॥
तत्रापि वापितारातिर्विहिताष्टाहिकः क्रमात् । प्राचीं प्रति प्रचालयं, चक्रानुचरसैनिकः ॥ ४८ ॥
तयोर्विभाणमद्वैताः, वैताढ्यमगमन्नगम् । भरतार्धद्वयीसीमारूपं भरतभूपतिः ॥ ४९ ॥
दक्षिणेऽथ नितम्बेऽस्य, स्तम्बेरममनोरमाम् । चमूममुञ्चदम्भूममूढक्रमविक्रमः ॥ ५० ॥
राजाऽष्टमं तपस्तेने, तेनाथ चलितासनः । आययौ मङ्क्षु वैताढ्यकुमारोऽवधिबोधितः ॥ ५१ ॥
भीरानि ढौकयित्वाऽथ, ढौकनान्येष चक्रिणे । अथादि तव दासोऽहमित्युदित्वा जगाम च ॥ ५२ ॥
प्रकटितरत्नाष्टमतपःपारणेनाथ भूभुजा । अष्टाहिकोत्सवाद्दूर्द्धमादिश्यत चमूपतिः ॥ ५३ ॥
सुषेण ! गच्छ वैताढ्य-सिन्धुदक्षिणनिष्कुटम् । शाधि निर्बाधमुर्वीयं, निम्नगां चर्मरत्नतः ॥ ५४ ॥
इत्यादेशमथाप्याप, प्राग्वत्स्फुरितभ्रुकुटिः । सार्धमर्धीकृतैः सैन्यैः, सुषेणो निम्नगामगात् ॥ ५५ ॥
नदीमदीनगम्भीरां, चर्मानद्धेन वर्मणा । अथोत्ततार सेनानी, रसेनानीतसम्भ्रमः ॥ ५६ ॥

---

१ विशिद्, म° संता० ॥ २ समागपः पा० ॥ ३ °क्षिपाम्बुधेः संता० पाला० ॥ ४ °प, तीरं पा० ॥ ५ °ष्टाहिकः सं० पा० । एवमग्रेऽपि ॥

सिंहलान् सिंहतुल्यौजा, बर्बरान् गर्वपर्वतः । यवनान् यवनाथश्रीः, कालः कालमुखान् रणे ॥ ५७ ॥
अपरानपि राजश्रीजनको योनकादिकान् । पराजिग्ये सुखेनैव, सुषेणध्वजिनीपतिः ॥ ५८ ॥
॥ युग्मम् ॥
जित्वेति सिन्धुसुत्तीर्यं, कीर्त्यमाणयशा जनैः । चक्रिणो ढौकयाञ्चक्रे, तद्दण्डान् दण्डनायकः ॥ ५९ ॥
तत्तमिस्रागुहाद्वारकपाटोद्घाटनाय सः । आदिष्टश्चक्रिणा चक्रे, गत्वा तत्राष्टमं तपः ॥ ६० ॥
कृतमालाभिधं देवमथोद्दिश्य चमूपतिः । तमिस्राकन्दरद्वारि, वितेनेऽष्टाहिकामहं ॥ ६१ ॥
हयारूढः प्रणम्याथ, कपाटे कन्दरामुखे । जघान दण्डरत्नेन, करेणेव तमोंऽशुमान् ॥ ६२ ॥
कपाटे अपि ते सद्यो, दण्डघातेन रंहसा । पश्चादभूतां वीरस्य, पक्षद्वयबले इव ॥ ६३ ॥
वाजिनं विनिवर्त्त्याथ, प्रतिलोमं चमूपतिः । राज्ञे विज्ञपयामास, कपाटोद्घाटनक्रियाम् ॥ ६४ ॥
सिन्धुरस्कन्धमारूढः, पुरतो भरतेश्वरः । मणिरत्नं समारोप्य, तमःशमनहेतवे ॥ ६५ ॥
प्रविवेश गुहागर्भे, समं निजचमूचरैः । तारकानिकरैः सोकमभ्रान्तरिव चन्द्रमाः ॥ ६६ ॥ युग्मम् ॥
मार्गे चैकोनपञ्चाशन्मण्डलानि चकार सः । लोकालोकाय काकिण्या, वामदक्षिणपक्षयोः ॥ ६७ ॥
उन्मग्नां च निमग्नां च, नद्यौ वीक्षितवानथ । तरत्यश्माऽपि पूर्वस्यां, नान्यस्यां तूलमप्यहो ! ॥ ६८ ॥
बद्धया वर्धकेर्बुद्ध्या, पद्यया सोऽन्वयया । समुत्ततार ते नद्यौ, यमभ्रूभङ्गभङ्गुरे ॥ ६९ ॥
अथोत्तरगुहाद्वारकपाटप्रत्तनिर्गमः । सचक्रः स व्रजन् रेजे, सभानुरिव वासरः ॥ ७० ॥
स तां गुहामतिक्रम्य, भरतार्धमथोत्तरम् । विवेश जेतुं कान्तारमिव सिंहोऽतिरंहसा ॥ ७१ ॥
तत्र चापातमात्रेऽपि, जनतात्रासहेतवः । मानिनो धनिनः शूराः, क्रूराकारपराक्रमाः ॥ ७२ ॥
कालाः कालायसेनेव, कृताङ्गा भिल्लभूभुजः । अदृष्टपूर्वाभिभवा, वसन्त्यापातसंज्ञकाः ॥ ७३ ॥
॥ युग्मम् ॥
किरातैरथ युद्धाय, सन्नद्धायतपत्तिभिः । चक्रिणः कृपणीचक्रे, चमूचक्रं रणाङ्गणे ॥ ७४ ॥
ततः सुषेणसेनानीः, सेनानीरनिशैर्विधुः । तुरङ्गरत्नमारूढः, खड्गरत्नकरोऽचलत् ॥ ७५ ॥
तं समायान्तमालोक्य, भिल्लाः सम्मुखगामिनः । पतङ्गा इव रङ्गन्तः, प्रदीपस्य विरेजिरे ॥ ७६ ॥
सौवर्णं फलकं बिभ्रत्, कालकूटासिभासुरम् । सुषेणोऽभाञ्चितं दीप्त्या, दिनेशमिव साञ्जनम् ॥ ७७ ॥
सोढुं प्रतापमेतस्य, क्षमायामक्षमा अमी । सिन्धोस्तीरगता गोत्रदेवताराधनं व्यधुः ॥ ७८ ॥
तेषामाराधनेनाथ, सुरा मेघमुखाभिधाः । एत्य प्राहुरहो वत्साः !, किमारब्धमिदं मुधा ! ॥ ७९ ॥
दूरे वैयमयं जेतुं, शक्रेणापि न शक्यते । अलङ्घ्यशासनश्चक्री, पृथिवीपाकशासनः ॥ ८० ॥
तथापि क्षयमेतस्य, युष्माकमनुरोधतः । उपसर्गं करिष्याम, इत्युक्त्वा ते तिरोऽभवन् ॥ ८१ ॥
अथ मेघमुखैर्देवैर्घनडम्बरमम्बरे । विचक्रे चक्रिसैन्योर्ध्वं, दिगन्तातङ्ककारणम् ॥ ८२ ॥
रसन्तो विरसं मेघा, मुक्तं वार्धेर्जलैः समम् । उद्वमन्तो व्यलोकयन्त, वाडवाग्निं तडिच्छलात् ॥ ८३ ॥
धारामुशलपातेन, खण्डयन्त इव क्षितिम् । राक्षसा इव तेऽभूवन्, घना भीषणमूर्तयः ॥ ८४ ॥
चर्मरत्नमथो चक्री, यावद्द्वादशयोजनीम् । पाणिस्पर्शेन विस्तार्यारोहत् सह चमूचरैः ॥ ८५ ॥
छत्ररत्नमथाप्युर्ध्वस्तावन्मात्रं नभोङ्गणे । चर्मरत्नस्थलोकानामुपरिष्टाद् व्यजृम्भत ॥ ८६ ॥

१ योनका° संता० ॥ २ सार्धं° संता० ॥

छत्रदण्डोपरिन्यस्तमणिरत्नप्रभावतः । शममन्तस्तमः प्राप, सम्पुटे च्छत्र-चर्मणोः ॥ ८७ ॥
प्रातरुप्तानि धान्यानि, गृहिरत्नेन चर्मणि । निष्पत्तिमापुः सन्ध्यायां, तथा शाक-फलाद्यपि ॥ ८८ ॥
अन्नैः शाकैः फलाद्यैश्च, गृहिरत्नप्रभावतः । सद्यः प्रतिगृहं मासैर्लोकः स्वर्गीव सोऽभवत् ॥ ८९ ॥
तरदण्डमिवालोक्य, तल्लोकैः सम्पुटं जले । भुवनेषु कृता शङ्के, ब्रह्माण्डमिति कल्पना ॥ ९० ॥
सप्तमेऽह्नि व्यतिक्रान्ते, चक्री चिन्तामिति व्यधात् ।
प्रत्यनीकं ममाप्युच्चैः, प्रत्यनीको नु कोऽम्बुदः ? ॥ ९१ ॥
अथ तस्य प्रभोश्चित्तानुवर्तनपराः सुराः । सहस्राः षोडशाप्युग्रभ्रूकुटीभङ्गभीषणाः ॥ ९२ ॥
गत्वा मेघमुखान् देवान्, नेत्रारुणविमानिभात् । उद्गिरन्त इव क्रोधमिदं वचनमूचिरे ॥ ९३ ॥
अरे रे ! केन वो दत्ता, दुर्दैवेनेदृशी मतिः ! ।
चक्री न यदि दृष्टोऽयं, तत् किं नामाऽपि न श्रुतः ? ॥ ९४ ॥
यात तद् दूरतः क्रूराः !, नैव यावदयं प्रभुः । दम्भोलिनेव चक्रेणाभिहन्ति भवतां शिरः ॥ ९५ ॥
इति यक्षवचः श्रुत्वा, तैर्द्रुतं विद्रुतं ततः । दुग्धधौतमिव व्योम, वैमल्यमभजत् तदा ॥ ९६ ॥
ढौकने स्वर्ण-माणिक्य-गज-वाजिनजानथ । आदाय म्लेच्छपाः सर्वे, भरतं शरणं ययुः ॥ ९७ ॥
भरतोऽपि प्रसद्यैतान्, विससर्ज महाशयः । नतेषु पक्षपातित्वमुत्तमानां हि लक्षणम् ॥ ९८ ॥
सिन्धोरथोत्तरं वार्धिगिरिसीमान्तनिष्कुटम् । जित्वा सुषेणतश्चक्री, ययौ क्षुद्रहिमालयम् ॥ ९९ ॥
दक्षिणेऽस्य नितम्बेऽस्य, न्यस्य सैन्यं नरेश्वरः । व्यधादुद्दिश्य हिमवत्कुमारं स तपोऽष्टमम् ॥ १०० ॥
रथारूढोऽष्टमान्तेऽथ, रथाग्रेण हिमाचलम् । त्रिस्ताडयित्वा हिमवत्कुमारस्येषुमक्षिपत् ॥ १०१ ॥
द्वासप्ततिमथो गत्वा, योजनान्यम्बरात् पतन् । हिमाचलकुमारेण, वीक्षितः स शरः पुरः ॥ १०२ ॥
विद्यामिवाथ कोपाग्नेः, स्तम्भनीं स कुमारकः ।
वीक्ष्य नामाक्षरश्रेणिं, काण्डदण्डेऽतिभक्तिमान् ॥ १०३ ॥
सुमनःसुमनोमालां, तथा गोशीर्षमौषधीः । ह्रदाम्भः कटकान् बाहुरक्षान् दिव्यांशुकान्यपि ॥ १०४ ॥
गत्वा भरतपादान्ते, प्राभृतीकृतवानयम् ।
महात्मनां हि पुण्यानि, किं न यच्छन्ति वाञ्छितम् ! ॥ १०५ ॥ विशेषकम् ॥
आर्षभिन्नं विधायाथ, चलितः कलितः श्रिया । अपानर्षभकूटाद्रिं, त्रिःशीर्षेण रथस्य सः ॥ १०६ ॥
तत्पूर्वकटके चक्री, काकिणीरत्नतोऽलिखत् । चक्रवर्त्यवसर्पिण्यां, भरतः प्रथमोऽस्म्यहम् ॥ १०७ ॥
व्याघुट्याथ गतः सैन्ये, पारणं वैरिवारणः । विधायाष्टाह्निकां चक्रे, तत्र कृत्यविचक्षणः ॥ १०८ ॥
अथ निर्दैन्यसैन्योऽयं, चक्री चक्रमनुव्रजन् । उदग्भिनम्बे वैताढ्यगिरेः सैन्यं न्यवीविशत् ॥ १०९ ॥
तस्मिन् नमि-विनम्याख्यौ, जेतुं विद्याधरेश्वरौ । अक्षिपत् क्षितिपः क्षिप्रमभ्रप्रसरं शरम् ॥ ११० ॥
अथ तौ कुपितौ वीक्ष्य, चक्रनामकसायकम् । प्राप्तौ साकं निजानीकैर्युद्धायोद्दामदुर्धरौ ॥ १११ ॥
समं विद्याधरसैन्यैर्द्वावपि विद्याधरेश्वरौ । विजेतुं समरं घोरमारेभे भरतेश्वरः ॥ ११२ ॥
दोर्दण्डयोः समारोप्य, कोदण्डं विदधे तदा । जयश्रिय. प्रवेशाय, भरतो रणतोरणम् ॥ ११३ ॥
अथ द्वादशवर्षान्ते, वर्षान्त इव भास्करः । करैरिव नरेश्चक्री, निशातानक्षिपद् घनान् ॥ ११४ ॥

---

१ ज्योऽस्तो, सर्वा प०।

प्रणष्टेऽथ बले मह्वौ, विद्याधरनरेश्वरौ । भरतेशं नमस्कृत्य, भक्तितो वाचमूचतुः ॥ ११५ ॥
त्वं क्षमस्व क्षमास्वामिन्नेतद् दुर्वृत्तमावयोः । प्रणिपातावधिः क्रोधः, सतां हि परिकीर्तितः ॥ ११६ ॥
स चिरत्नानि रत्नानि, नमिर्नमितमस्तकः । ढौकने ढौकयामास, क्षमाशक्राय चक्रिणे ॥ ११७ ॥
स्त्रीरत्नेनाथ कन्दर्पजगज्जयपताकया । स्थापत्येन भुवः पत्ये, प्राभृतं विनमिर्व्यधात् ॥ ११८ ॥
एतौ च सुतयोर्न्यस्य, विद्याधरधुरीणताम् । गृहीतदीक्षौ तीर्थेशसेवामेवाथ चक्रतुः ॥ ११९ ॥
अथ त्रिपथगातीरे, सैन्यं न्यस्य नरेश्वरः । असाधयत् सुषेणेन, गाङ्गमुत्तरनिष्कुटम् ॥ १२० ॥
तं चाष्टमतपःसम्पत्सम्पटीकृतमानसा । उपतस्थे स्वयं गङ्गादेवी विविधढौकनैः ॥ १२१ ॥
तदाऽसौ नृपमालोक्य, तस्मिन्नेवानुरागिणी । ईर्ष्ययेवेषुभिर्जघ्ने, विषमैर्विषमेषुणा ॥ १२२ ॥
असौ तत्रैव तत्प्रेमवारिवारणतां गतः । निनाय नायको भूमेः, सहस्राब्दीं घटीमिव ॥ १२३ ॥
अथ खण्डप्रपाताख्यां, गुहामभ्येत्य भूपतिः । नाट्यमालं सुरं तत्र, साधयामास पूर्ववत् ॥ १२४ ॥
गुहां तामप्यतिक्रम्य, तन्मिश्रावन्नरेश्वरः । सैन्यं निवेशयामास, सैकते सौरसैन्धवे ॥ १२५ ॥
तत्राष्टमेन तपसाऽसाधयद् वसुधाधवः । निधीन् यक्षसहस्रेण, प्रत्येकं कृतसन्निधीन् ॥ १२६ ॥
साधयित्वा सुषेणेन, गङ्गादक्षिणनिष्कुटम् । नृपोऽचालीदयायोध्यां, प्रति सिंहो गुहामिव ॥ १२७ ॥
सुखं सैन्यरजःकीर्णा, तुरङ्गैरुदतारि या । कष्टं मदाम्भोगम्भीरा, सैव शैवलिनी द्विपैः ॥ १२८ ॥
रथाश्वैर्लुर्जवाद् भूमेर्भ्रमयन्तो ध्वजांशुकम् । पत्तयोऽप्यनुकुर्वाणाः, कृपाणावर्तनैरिमान् ॥ १२९ ॥
गोरसप्राभृतभृतो, ग्रामवृद्धान् पदे पदे । भूपः स्वयमभाषिष्ट, तद्भाषा-मौग्ध्यकौतुकी ॥ १३० ॥
इति क्ष्मापश्चमूरेणुपूरैः पिहितभानुभिः । एकच्छत्रामिव भुवं, निर्माय स्वपुरीं ययौ ॥ १३१ ॥
बिम्बितान् रत्नवप्राग्रे, तदा पौरैश्चमूचरान् । आरोहत इवारूढैर्दृष्ट्वा हृष्टैः करोऽर्पितः ॥ १३२ ॥
अभ्युद्यातस्ततः प्रीतर्गौरवात् पौर-मन्त्रिभिः । सैन्यैरनुगतः पुण्ये, मुहूर्ते कृतमङ्गलः ॥ १३३ ॥
स्फुरत्कपाटपक्ष्माढ्यप्रतोलीनेत्रवर्त्मना । अथाविशत् पुरस्तस्या, हृदि सौभाग्यभूर्नृपः ॥ १३४ ॥ युग्मम् ॥
वन्दिवृन्दमुखाम्भोजस्फुरत्पट्पदशब्दितैः । भासुराभ्युदयो भाभिर्दिवाकर इवापरः ॥ १३५ ॥
पश्यन्तीनां पुरो हारयष्टियुग्मेऽपि बिम्बितः । हृदि स्फुटीभवत्काममद्वितीय इव योषिताम् ॥ १३६ ॥
व्यालोलानिव कल्लोलानानन्दक्षीरनीरधेः । पश्यन् वातेरितान् केतुपटाननुनिकेतनम् ॥ १३७ ॥
भासुरं रभसाऽऽरब्धवाद्य-नृत्यादिकौतुकैः । कृतमाङ्गलिकं लोकं, मध्ये मध्ये कृतार्थयन् ॥ १३८ ॥
बालाः पुत्रीरिव तदा, सुप्रौढा भगिनीरिव । जननीरिव वृद्धास्तु, निर्विकारं विलोकयन् ॥ १३९ ॥
समाससाद सदनं, सदनन्तगुणो नृपः । अमन्दानन्दसन्दोहकन्दो हरिपराक्रमः ॥ १४० ॥

॥ पड्भिः कुलकम् ॥

अभ्येत्याभ्येत्य भूपालैः, क्रमशः परिकल्पितम् । स भेजे चक्रवर्तित्वाभिषेकं द्वादशाब्दिकम् ॥ १४१ ॥
स पश्यन् स्वजनान् सर्वान्, सुन्दरीं मन्दिरोदरे । ददर्श कर्शिताकारां, कलामिव कलावतः ॥ १४२ ॥
कृशत्वकारणं तस्याः, साक्षेपमथ भूभुजा । ऊचुर्नियोगिनः पृष्टा, नास्माकं देव ! दूषणम् ॥ १४३ ॥
प्रभोः षष्टिसहस्राब्दीं, दिग्जयाद्दिनादियम् । आचाम्लानि चकारोर्धनेनग्रहणसाग्रहा ॥ १४४ ॥

---

१ 'नृत्यादि' संता० ॥ २ 'तुर्की' पता० । 'भुक्तम्' संता० ॥

चक्रिणाऽथ व्रतायासौ, विसृष्टाऽष्टापदे गिरौ। दक्षा दीक्षां प्रभोः पार्श्वे, जगृहे गृहनिस्पृहा ॥ १४५ ॥
चक्रिराज्याभिषेकेऽथ, तस्मिन् द्वादशवार्षिके। आगता-ऽनागतान् लोकान्, प्रमुत्वादवलोकयन् ॥१४६॥
निजानुजाननायातान्, विज्ञाय न्यायवित्तमः। तान् प्रति प्रेषयामास, दूतान् भूतलवासवः ॥ १४७ ॥
॥ युग्मम् ॥
यदि राज्यार्थिनस्तद्भोः !, भरतं कुरुत प्रभुम्। दूतोक्तिमिति ते श्रुत्वा, जगदुर्भरतानुजाः ॥ १४८ ॥
विभज्य राज्यमस्माकमेतस्यापि भवत्प्रभोः। तातेन दत्तमस्मत्तः, स किमाच्छेत्तुमिच्छति? ॥ १४९ ॥
अधिकेन न नः कार्यं, रक्षितुं स्वं स्वयं क्षमाः। अयोग-क्षेमकृत् तस्मान्नाथः कथमयं भवेत्? ॥ १५० ॥
बलीयानथ यद्येष, निःशेषद्वेषिशातनः। तदेतु वयमप्येते, पितुस्तस्यैव सूनवः ॥ १५१ ॥
किन्तु तातमनापृच्छ्य, वयं स्वच्छन्दकारिणः। अग्रजेन समं क्रोधाद्, योद्धुमीहामहे नहि ॥ १५२ ॥

इत्युक्त्वाऽष्टापदे गत्वा, नत्वा निर्वृजिनं जिनम्।
तत् ते भरतसन्दिष्टं, सर्वमूर्वीभुजोऽभ्यधुः ॥ १५३ ॥

सिञ्चन्निव सुधावृष्ट्या, वसुधामृषभप्रभुः। तानुवाच ज्वलत्क्रोधवह्नेरह्नाय शान्तये ॥ १५४ ॥
चपला चपलेव श्रीर्भात्यसौ भुवनान्तरे। कल्याणवाञ्छया वत्सास्तत् तां गृह्णीत किं मुधा? ॥ १५५ ॥
किञ्च स्वःसम्भवैर्भोगैर्या तृप्तिरभवन्न वः। सा मर्त्यभोगैरङ्गारकारकस्येव किं भवेत्? ॥ १५६ ॥

## अङ्गारकारकदृष्टान्तः

तथाहम्भोहृतिं कश्चिद्, गृहीत्वाऽङ्गारकारकः। रीणवारिण्यरण्येऽगादङ्गारकरणोद्यतः ॥ १५७ ॥
भीष्मग्रीष्मार्ककार्कश्यकृशानुकृतया तृषा। स तृप्तिं नाप्तवान् सर्वं, पायं पायं पयो दृतेः ॥ १५८ ॥
क्वचित् तरुतले सुप्तः, स्वप्ने सदनमागतः। परेत इव पानीयं, समग्रमपि सोऽपिबत् ॥ १५९ ॥
तथाऽप्यच्छिन्नतृष्णोऽयं, भ्रामं भ्रामं जलाशयान्। वह्निरौर्व इवापूर्वः, सर्वानुर्व्यामशोषयत् ॥ १६० ॥
अथैकं कश्मलक्षारदुरापसलिलं मरौ। कूपं प्राप्य भ्रमन् मेने, प्रत्यक्षं क्षीरनीरधिम् ॥ १६१ ॥
तत्रापि स तृषाऽऽक्रान्त[1], पयसे कुशपूलकम्। संयोज्य रज्जुभिः क्षिप्त्वा, सरसं तरसाऽकृषत् ॥ १६२ ॥
अतिनिम्नतया कूपः, कुभूप इव सेवकात्। यातः स्वदत्तमादत्त, सर्वस्वं तृणपूलकात् ॥ १६३ ॥
पूलकादथ निश्च्योत्य, पाश्चात्यास्तोयविप्रुषः। स चातक इवाम्भोदादुन्मुखस्तृषितः पपौ ॥ १६४ ॥
तत् तृष्णा याऽस्य न च्छिन्ना, वारिधेरपि वारिभिः। किं सा निरङ्कुशा पूलकुशाग्रपयसा त्रुटेत्? ॥ १६५ ॥
युष्माकमपि तद् वत्साः !, या दिव्यैरपि नात्रुटत्। मर्त्यलोकभवैर्भोगैः, किं सा तृष्णा त्रुटिष्यति? ॥१६६॥
श्रुत्वेति देशनां भर्तुर्लक्ष्मीसुखपराङ्मुखाः। अथाष्टनवतिर्भेजुस्ते व्रतं भरतानुजाः ॥ १६७ ॥
दूतास्ततो निवृत्त्याथ, स्वामिने विस्मयस्मिताः। सोदराणां यथावृत्तं, वृत्तान्तं ते व्यजिज्ञपन् ॥ १६८ ॥
अथ प्राज्यानि राज्यानि, तेषां भरतभूपतिः। जग्रसे सकलान्येष, सर्वाङ्गानीव भस्मकी ॥ १६९ ॥
अपरेद्युर्नृपप्रेर्णायेणीसम्मार्जितक्रमम्। व्यजिज्ञपन्नृपं नत्वा, सुषेणो गर्वपर्वतः ॥ १७० ॥
कृत्वाऽपि दिग्जयं स्वामिश्चक्रमायुधमन्दिरे। एतद् विशति नाद्यापि, यथा शिष्यः शठो मठे[3] ॥ १७१ ॥
अथ सर्वोपधाशुद्धबुद्धिः सचिवपुङ्गवः। उवाच वाचमाचार्य, इव क्ष्मायामरागतः ॥ १७२ ॥

---

१ स्वयं स्वच्छन्दचारिणा खं० ॥ २ °रे निखिलान्येव खं० पाता० ॥ ३ मठम् पाता० ॥

स्वामिन् ! को नाम दिग्यात्राकर्तरि त्वयि भर्तरि । तिष्ठेताथापि ? चण्डांशौ, तमस्काण्डं कियच्चिरम् ? ॥ १७३ ॥
आः ! ज्ञातमथवा स्वामिन्नवश्यं न वशंवदः । स बाहुबलिभूपालस्तवैवावरजो बली ॥ १७४ ॥
अपि विश्वं स सामर्षः, सवायुरिव पावकः । विश्वं दग्धुमलं सद्गधूमान्धीकृतशात्रवः ॥ १७५ ॥
षट्खण्डं भरतक्षेत्रं, जित्वाऽपि जगतीपते ! । अजित्वा तं जगद्वीरं, वास्तवस्तव कः स्तवः ? ॥ १७६ ॥
एतस्याविजये देव !, दिग्जयव्याजतस्त्वया । अस्मिन् षट्खण्डभूखण्डे, कृतं देशान्तरेक्षणम् ॥ १७७ ॥
तदेष देव ! भवतो, युज्यते माज्यतेजसः । नोपेक्षितुं क्षितिस्वामिन् !, नमितामितशात्रवः ॥ १७८ ॥
अथ प्रथमतो न त्वं, चान्धवं बन्धुवत्सल ! । योद्धुमुत्सहसे दूतं, तत् कश्चित् प्रेषयाधुना ॥ १७९ ॥
वीरंमन्यो न मन्येत, तवाज्ञां यदि चानुजः । तदा यदायुधीयानां, बुध्यते तद् विधीयताम् ॥ १८० ॥
इत्यमात्योदिते दूतं, दक्षस्तक्षशिलां प्रति । स वेगेन सुवेगाख्यं, निसृष्टार्थं विसृष्टवान् ॥ १८१ ॥
अथास्खलद्गतिर्वायुरिवायं वेगतोऽगमत् । निवारितोऽपि शकुनैः, सुवेगो दूत्यदक्षिणः ॥ १८२ ॥
निम्नगा-नगर-ग्राम-कान्तार-गिरि-गह्वरान् । सुवेगः स लघूलङ्घ्य, बहलीदेशमासदत् ॥ १८३ ॥
श्रीमद्बाहुबलिस्वामियशःसुरभिताननैः । कान्तं वनान्तविश्रान्तैः, क्रीडद्गोपाङ्गनागणैः ॥ १८४ ॥
गायन्तीमिश्चरित्राणि, श्रीयुगादिजिनेशितुः । नन्दनादेत्य दैत्यारिस्त्रीभिः सान्द्रीकृतद्रुमम् ॥ १८५ ॥
अलङ्कारप्रभाभिन्नतमिश्रासु दिनेष्विव । तमिश्रास्वपि पान्थस्त्रीपाणिन्धममवत्पथम् ॥ १८६ ॥
उपेत्य स्वर्गिणां स्वर्गादद्भुतश्रीदिदृक्षया । हृष्टानामद्भुतैर्भोगैर्दुस्त्यजीभूतभूतलम् ॥ १८७ ॥
॥ पञ्चभिः कुलकम् ॥
असावासाद्य तं देशमपूर्वाद्भुतवैभवम् । जन्मान्तरमिव प्राप्तः, कृत्यं विस्मृतवानिव ॥ १८८ ॥
अथ तक्षशिलां बाहुबलिबाहुबलोर्जिताम् । नगरीं स गरीयस्याः, सम्पदः पदमासदत् ॥ १८९ ॥
पश्यन्नस्यामसौ पुर्यां, वैभवं भुवनाद्भुतम् । उन्मुखो ददृशे लोकैर्विक्रीतेम्य इवोद्धृतः ॥ १९० ॥
क्षणं प्राप्य नृसिंहस्य, सिंहद्वारं महीभुजः । तस्थौ रथादथोत्तीर्य, स्मरन्निव स वाचिकम् ॥ १९१ ॥
गच्छन्नथाग्रतश्चक्रिप्रताप इव मूर्तिमान् । तस्थौ राजकुलद्वारि, वारितो वेत्रिभिः क्षणम् ॥ १९२ ॥
अथ बाहुबलेराज्ञां, द्वाःस्थेनासाद्य सादरम् । प्रावेश्यत सुवेगोऽयं, सहर्षः पर्षदन्तरे ॥ १९३ ॥
स सभान्तः सभासद्भिः, क्वचिन्नीलाश्मकुट्टिमे । जलभीत्योद्धरन् वासः, सहासमवलोकितः ॥ १९४ ॥
आकाशस्फटिकस्तम्भस्खलिताङ्गतया क्वचित् । अन्यत्रापि चचारासौ, हस्तैर्न्यस्तैः पुरः पुरः ॥ १९५ ॥
रत्नस्तम्भसमालम्बिप्रतिबिम्बमवेक्ष्य सः । कृच्छ्रेण जज्ञे विज्ञोऽपि, तत्त्वतः पृथिवीपतिम् ॥ १९६ ॥
नमस्कृत्य नृपं पुञ्जीभूतहारः स भूतले । विशिष्टो विष्टरे वेत्रिनिर्दिष्टे स निविष्टवान् ॥ १९७ ॥
मुक्ताब्जविलसद्वाणी, रणन्नूपुरहारिणीम् । उज्जगार गिरं कर्णसुधां स वसुधाधवः ॥ १९८ ॥
कच्चित् कुशलमार्यस्य ?, कच्चित् कुशलिनी प्रजा ? । कुशली कच्चिदार्यस्य, सेनान्यादिपरिच्छदः ? ॥ १९९ ॥
स षट्खण्डं क्षमाखण्डमाखण्डलपराक्रमः । साधयन्न क्वचित् कच्चिदार्यः प्राप पराभवम् ? ॥ २०० ॥
आवर्जिता जिताः कच्चिदार्येण जगतीभुजः । यथाऽन्वहं वहन्तस्तामाज्ञां न स्युर्विपादिनः ? ॥ २०१ ॥
समं जनानुरागेण, स्पर्धया वृद्धिगामिनः । आर्यस्य धर्म-कामा-ऽर्थां, न बाधन्ते परस्परम् ? ॥ २०२ ॥

१ 'स्खलः' संता० पाता० ॥ २ 'त्योदितैर्दूतं' संता० ॥ ३ 'गो दौत्यद' संता० ॥
४ 'नाजनैः' संता० पाता० ॥

इत्युक्त्वाऽवस्थिते राज्ञि, दूतः सद्भूतमब्रवीत् । कस्तस्य कुशलप्रश्नः ?, कुशलं जगतोऽपि यः ॥ २०३ ॥
कस्तस्मिन् सैन्यलेशेऽपि[1], देशे चाकुशलक्रमः ? । यस्मिन् सुरकृतोपास्तिः, शास्तिकृद् बान्धवस्तव ॥२०४॥
तिष्ठेत पुरतः कश्चिद्, दिग्जैत्रे तत्र शात्रवः ? । अर्के विक्रामति ध्वान्तविक्रमः क्रमतां कुतः ? ॥ २०५ ॥
अनेकैः समयेकाऽपि, नानादेशनिवेशिभिः[2] । तस्याज्ञा मान्यते मूर्ध्नि, विधेरिच्छेव जन्मिभिः ॥ २०६ ॥
भूभुजस्तस्य षाड्गुण्योपाय-शक्तित्रयादयः । फलन्ति चिन्तितैरर्थैः, साक्षात् कल्पद्रुमा इव ॥ २०७ ॥
निर्बाधमेव सेवन्ते, पुरुषार्थास्त्रयोऽपि तम् । त्रिभागा इव सन्ध्यायाः, दिवसं भास्वरोदयम् ॥ २०८ ॥
नृपैर्ललाटिकीभूतैः, सेवितोऽपि परैः परम् । न[3] मोदते स दूरस्थानपश्यन्ननुजान् निजान् ॥ २०९ ॥
सत्यामपि स्यात्को यस्यां, बान्धवानां विलोकनम् । श्रियं सारामिमां कारानुकारां गणयत्ययम् ॥ २१० ॥
विजित्य जगतीमस्य, विनीतायामुपेयुषः । सम्बन्धिभिः सुहृद्भिश्च, चक्रे चक्रिपदोत्सवः[4] ॥ २११ ॥
तवाग्रजन्मनस्तस्मिन्नुत्सवे पृथिवीभुजः । लक्ष्मी-जीवितरक्षार्थं, के स्वयं न समाययुः ? ॥ २१२ ॥
अनायातानयं ज्ञात्वा, महे द्वादशवार्षिके । किलाऽऽकारयितुं भ्रातॄन्, प्रेषयामास पूरुषान् ॥ २१३ ॥
विकल्प्यानल्पसङ्कल्पाः[5], किमप्येते सुमेधसः । आगत्य तातपादान्ते, दान्तात्मानो व्रतं व्यधुः ॥ २१४ ॥
तदयं तद्वियोगार्त्तिगर्तसम्पातकातरः । समागत्य समुद्धर्तुं, साम्प्रतं तव साम्प्रतम् ॥ २१५ ॥
यद्यपि भ्रातृभावेन, त्वं पुरा न समागमः । वक्त्यन्यथा तथाऽप्येष, सर्वथा दुर्मुखो जनः ॥ २१६ ॥
तत् स्वयं हर्षसोत्कर्षदृष्टिपीयूषवृष्टिभिः । द्विजिह्वमभवद्दोषमोषः कर्तुं तवोचितः ॥ २१७ ॥
स स्वयं दान-सम्मानपूरितार्थिमनोरथः । त्वत्प्रणामात्र नामान्यज्जगन्मान्यः समीहते ॥ २१८ ॥
धीरा न चित्ते वित्तेऽयं, चेष्टन्ते किन्तु तेजसे । मुक्तापङ्क्तिधिया हन्ति, सिंहः किं हस्तिमस्तकम् ? ॥ २१९ ॥
भ्राता ममायं भूभर्ता, मास्म भूरिति निर्भयः । राज्ञामाज्ञाधनानां हि, ज्ञातेयं कोपयुज्यते ? ॥ २२० ॥
समन्युरथ तं वीरंमन्यस्त्वमवमन्यसे । भासि भास्वति तत् तस्मिन्नुधस्तद्योतपोतवत् ॥ २२१ ॥
पुत्रस्त्वमपि नाभेयप्रभोर्भरतवत् ततः । कुलप्रभुरसि स्वामिन् !, हितं जल्पामि तत् तव ॥ २२२ ॥
करालगरलः सर्पः, पावकः पवनोद्धतः[6] । प्रभुः प्रौढप्रतापश्च, विश्वास्या [illegible] त्रयोऽप्यमी ॥ २२३ ॥
जीवितव्येन राज्येन, कार्यं तद् विद्यते यदि । तदा रक्षोपमं मूर्ध्नि, धार्यतां भ्रातृशासनम् ॥ २२४ ॥
नित्यं वितन्यते यत्र, सेवा देवा-ऽसुरैरपि । भवतो मर्त्यमात्रस्य, सेवायां तत्र का त्रपा ? ॥ २२५ ॥
एवं वदति दूतेऽत्र, सुनन्दानन्दनः स्वयम् । बाहुं विलोकयामास, रोमाञ्चकवचाञ्चितम् ॥ २२६ ॥
अवोचदधरज्योतिर्मिश्रदन्तांशुदम्भतः । कोपपाटलितां साक्षादिव वाचं धराधवः ॥ २२७ ॥
ज्यायानयं मम भ्राता, यदीच्छति समागमम् । युक्तं यदेष तातस्य, तुल्यः पूज्यो हि सर्वथा ॥ २२८ ॥
युक्तं तदपि यत् प्रैषीत्, प्रभुस्ते भरतेश्वरः । आकारणानि बन्धूनां, गुरोः कृत्यमिदं यतः ॥ २२९ ॥
तेषु तातानुयातेषु, स्वयं यत्त्वेष ते विभुः । तेषां राज्यानि जग्राह, स्नेहोऽयं दूत ! नूतनः ॥ २३० ॥
कनिष्ठैर्विजितो ज्येष्ठः, प्रवादो मास्म भूदयम् । इत्यन्वगुरमी तातं, जितकाशी तदेष किम् ? ॥ २३१ ॥
त्वद्भर्ता भरतक्षेत्रं, जित्वा तन्मां विरोधयन् । निष्पन्नं हेम नागेन, नियतं दूषयत्ययम् ॥ २३२ ॥

---

१ 'शे च, देशे भंता॰ पाता॰ ॥ २ 'शनिवासिभिः खंता॰ ॥ ३ भाऽऽमो' पाता॰ ॥ ४ 'क्रिमहोत्स' खता॰ ॥ ५ विकल्प्यानेकमङ्कल्पान्, किमप्येते खंता॰ । विकल्प्यानल्पसङ्कल्पान्, विकल्पेते सुमे' पाता॰ ॥ ६ 'नोद्धुरः । प्रभुः खता॰ पाता॰ ॥

भ्रातृभायादनायाते, निर्भये वा स्वभावतः । किन्तु मय्येव लोकोऽयमबद्धवदनोऽभवत् ? ॥ २३३ ॥
किं वा यदेष भ्रातॄणां, राज्यानि नृपतिस्तव । जग्रसे श्वेव वान्तानि, तथा तत्राप्यभूदयम् ? ॥ २३४ ॥
मम प्रभुरसावेव, सेव्यः श्रीनाभिनन्दनः । सुरा-ऽसुरनृपैः क्लृप्तप्रथः प्रथमतीर्थकृत् ॥ २३५ ॥
पिता गुरुर्वा स्वामी वा, जन्मन्येकत्र जन्मिनाम् । एक एव भवेन्नान्यस्तत् किं तेन करोम्यहम् ? ॥ २३६ ॥
स मम ज्येष्ठभावेन, प्रणामं यदि लप्स्यते । न प्रभुत्वाभिमानेन, पुनः स्वप्नेऽपि ते पतिः ॥ २३७ ॥
यद्व मत्तोऽपि तेजांसि, नाथस्ते नाथते ध्रुवम् । कक्षस्य वह्नितस्तेजोवाञ्छामनुकरोति तत् ॥ २३८ ॥
ज्ञातेयं कोपयुज्येत, राज्ञां ? मिथ्येति ते वचः । मयि सत्यप्ययं राज्यश्रियं भुङ्क्ते कुतोऽन्यथा ? ॥ २३९ ॥
ते चान्ये ये दधुर्भास्वत्यस्मिन् खद्योतपोतताम् । अहं तु हन्त ! तस्य स्यामस्तभूधरबन्धुरः ॥ २४० ॥
त्रैलोक्यपूजितो यस्य, पिता श्रीवृषभप्रभुः । किञ्चायमनुजः शौर्यतृणीकृतजगत्त्रयः ॥ २४१ ॥
सुरा-ऽसुर-नरैः सोऽयं, सेव्यो यत् तदिदं कियत् ? ।
इदं वद यदेतस्य, पुरः कोऽयं सुरेश्वरः ? ॥ २४२ ॥ युग्मम् ॥
तत्त्र त्रपाऽस्य सेवायां, करुणा तु ममाद्भुता । लज्जिष्यतेऽसौ मां वीक्ष्य, यत् पुरा खुरलीजितः ॥ २४३ ॥
पुरा कारासुखं प्राप, यत्रास्मद्भुजपञ्जरे । तत् किं विस्मृतमेतस्य, चाटुकृच्चाटुगर्विणः ? ॥ २४४ ॥
तद् गच्छ त्वं समायातु, स स्वयं भवतः प्रभुः । यथाऽस्य गर्वदुष्कर्मप्रायश्चित्तं करोम्यहम् ॥ २४५ ॥
दूतोऽथ धैर्यमालम्ब्य, सभयः स सभागृहात् । निस्ससार सभासद्भिः, कूणिताक्षं विलोकितः ॥ २४६ ॥
सज्जीकृतायुधान् वीरान्, भृत्यभृत्यानिबोधतान् । पश्यन् सुवेगो वेगेन, निरगान्नृपमन्दिरात् ॥ २४७ ॥
नवः क इव दूतोऽयं, भरतस्य महीभुजः ? । किमन्योऽपि नृपो ज्येष्ठः, स्वामिनोऽस्यैव बान्धवः ॥ २४८ ॥
कियत्कालं गतः सोऽभूज्जयाय भरतक्षितेः ? । अत्रामुं स कुतः प्रैषीदनुजाकारणेच्छया ? ॥ २४९ ॥
अस्य बन्धौ किमुत्कण्ठा ?, न किन्तु प्राभवस्पृहा ।
मन्त्रे किं नाखुरप्यस्य, शतशः सन्ति मन्त्रिणः ? ॥ २५० ॥
तैः स किं बलिनं सिंहं, खलीकुर्वन्न वारितः ? । प्रत्युत प्रेरितोऽमीभिर्बुद्धिः कर्मानुसारिणी ? ॥ २५१ ॥
जितं किं हारयत्येष, पट्खण्डं मण्डलं भुवः ? । जितकाशितया वेत्ति, न मूढः प्रौढिमात्मनः ॥ २५२ ॥
इत्थं पथि कथाः शृण्वन्, मिथः पौरमुखोद्गताः । दूरादुल्लङ्घयामास, सुवेगो नगरीमिमाम् ॥ २५३ ॥
॥ पद्भिः कुलकम् ॥
क्रमेणाथ प्रयातोऽयमटवीं भिल्लसङ्कुलाम् । श्रीबाहुबलिभूपालवलैराटविकैर्वृताम् ॥ २५४ ॥
तत्र शार्ङ्गधरान् कांश्चित्, पर्शुस्पर्शपरान् परान् ।
एकानदमायुधानन्यान्, कुन्तदन्तुरिताम्बरान् ॥ २५५ ॥
अयं मूर्त्तानिवोत्साहान्, श्रीबाहुबलिभूभुजः । भिल्लानालोकयामास, सुवेगः कम्पिताकृतिः ॥ २५६ ॥
अटवीं तामथोल्लङ्घ्य, कथञ्चिदतिभीषणाम् । चक्रिणो देशमासाद्य, स्वं मेने स पुनर्नवम् ॥ २५७ ॥
अपक्वान्यपि धान्यानि, लुनीत ननु रंहसा । अपूतान्यपि गुप्तानु, क्षिपत क्षोणिखानिषु ॥ २५८ ॥
अतिभारसहानुष्ट्रैः, शकटान् कुरुतोत्कटान् । लभ्य-देयानि संशोच्योच्चलितुं भवतोद्यताः ॥ २५९ ॥
यस्माद् भरतभूपालमभिषेणयितुं बली । श्रूयतेऽम्बुधनो बाहुबलिर्बाहुबलोन्मदः ॥ २६० ॥

१ °क्षं निरीक्षितः संता० पाता० ॥ २ संशुष्योच्च° संता० पाता० ॥

प्रतिक्षेत्रं प्रतिग्रामं, चक्रिदेशनिवासिनाम् । व्याकुलत्वं विलोक्येति, चिन्तयामासिवानसौ ॥ २६१ ॥
॥ कलापकम् ॥
अहो ! विग्रहवार्तेयमस्मत्तो वेगवत्तमा । अग्रे भूत्वा यतः कश्चिन्नागतः श्रूयते त्वसौ ॥ २६२ ॥
अहो ! प्रौढप्रतापत्वं, श्रीबाहुबलिभूभुजः । स्वस्थानस्थेऽपि यत् तस्मिन्नस्माकं भयमीदृशम् ॥ २६३ ॥
चिन्तयन्निति सम्प्राप्तो, विनीतायां स नीतिमान् । विज्ञो विज्ञपयामास, यथावन्नृपतेः पुरः ॥ २६४ ॥
पटाञ्चलेन चेद् भानुश्छाद्यः स्यात् तरुणच्छविः । यदि ज्वालाकुलो वह्निर्भवेद् ग्राह्यश्च मुष्टिना ॥ २६५ ॥
तवानुजस्तथाप्येष, स्वामिन् ! षट्खण्डभूपते ! । उत्कर्षिपौरुषो नान्यैर्जेतुं शक्यः सुरैरपि ॥ २६६ ॥
॥ युग्मम् ॥

श्रुत्वेति भरताधीशः, सोत्साहो मन्त्रिभाषितैः । प्रयाणं कारयामास, पुरीं तक्षशिलां प्रति ॥ २६७ ॥
सम्पन्नपुलका कुन्तैः, स्विन्ना करिमदाम्बुभिः । स्वैरं भर्त्रा बलाक्रान्ता, चकम्पे काश्यपी तदा ॥ २६८ ॥
मारुतस्य मुखे धूलिं, क्षिपन्तश्चरणोद्धृताम् । वाजिनः परितोऽधावन्, सत्वराः सत्त्वराजिनः ॥ २६९ ॥
द्विपद्यशोमहश्चन्द्र-भानुच्छादनहेतवे । वहन्तो मेघलेखावत्, सज्ञान् वीरास्तदाऽचलन् ॥ २७० ॥
वंशनासास्तुरङ्गाक्षाः, पताकातिलकास्तदा । प्रचेलुश्चक्रताडङ्का, रथाः सेनाननश्रियः ॥ २७१ ॥
स्थिरामस्थिरयद् वेगात्, तच्चचाल बलं तदा । उद्यद्धूलिभरैरब्धिं, गम्भीरमगभीरयत् ॥ २७२ ॥
बहलीदेशसीमानमसमानपराक्रमः । आचक्राम क्रमाच्चक्री, वियद्देशमिवांशुमान् ॥ २७३ ॥
ज्ञात्वा तत् परिघोद्दालबाहुर्बाहुबलिर्बलम् । प्रेरयामास कल्पान्तोत्पातवात इवोदधिम् ॥ २७४ ॥
तद्भेरीनलिकायन्त्रप्रेरितैः समिरोर्मिभिः । भटाः प्रदीपितक्रोधवह्नयश्चेलुरुच्चकैः ॥ २७५ ॥
नेदुस्तदा रिपुप्राणप्रयाणपटहोपमाः । निःस्वानप्रकराः शब्दैरुदरम्भरयो दिशाम् ॥ २७६ ॥
संसिच्य मदपाथोभिः, संवीज्य श्रुतिमारुतैः । करिणः कम्पयामासुः, शीतार्तामिव मेदिनीम् ॥ २७७ ॥
खनन्ति स्म खुरैः क्षोणिं, जवना वाजिराजयः । आक्रष्टुमिव पानीयं, सेनायास्तृप्तिहेतवे ॥ २७८ ॥
तरङ्गैरिव सध्यानैर्यलैर्बाहुबलिस्ततः । महीमाच्छादयामास, कल्पान्तभ्रान्तवार्धिवत् ॥ २७९ ॥
उपान्ते चक्रिसेनायाः, सेनामयमवासयत् । प्रातस्तिमिरघोरण्याः, शूरोऽनूरुप्रभामिव ॥ २८० ॥
गाम्भीर्यं दर्शयन्तोऽपि, तदा सैन्यैः कदर्थिताः । तत्कालं कलयामासुः, कलुषत्वं जलाशयाः ॥ २८१ ॥
स्थूला स्थुलततिस्तेने, तदा गुरुगिरिश्रियम् । तटार्गलितमातङ्गगण्डशैलाऽतिदुर्गमा ॥ २८२ ॥
गुरुडम्बरमौलिस्थरत्नकुम्भसमानताम् । रविर्लिप्सुरिव प्राप, तदाऽस्तगिरिमस्तकम् ॥ २८३ ॥
अस्ताचलपतद्भानुगोलकोच्छलितैरथ । पाथोभिरिव पाथोधिस्तमोभिर्व्यानशे नभः ॥ २८४ ॥
तदाऽर्क-मन्दरक्षोभान्निःसरन्त्या इव श्रियः । उन्ममज्ज मुखाम्भोजमम्भोधेरिन्दुकैतवात् ॥ २८५ ॥
सेनाभटेषु कुर्वत्सु, शस्त्रजागरणोत्सवम् । खङ्गं जागरयामास, शशाङ्कोऽप्यङ्ककैतवात् ॥ २८६ ॥
स्तुतिव्रतानामन्योन्यं, वचनाहुतिभिर्भृशम् । दिदीपे नृपयोर्बद्धबोधः क्रोधधनञ्जयः ॥ २८७ ॥
ततस्ततरणोत्साहैः, सैन्ययोरुभयोर्भटैः । रणदेव्याः पुरस्तेने, निद्रैव प्रथमं बलिः ॥ २८८ ॥
बल्योस्तूर्यनिर्घोषैर्मृगं त्रस्तमिवाङ्कतः । दिदृक्षुरथ शीतांशुरगादस्ताद्रिकाननम् ॥ २८९ ॥
ततः पूर्वाद्रिमारूढे, देवे दिवसभर्तरि । रागेणाभ्यागमत्ताभ्यां, चक्राभ्यामुपचक्रमे ॥ २९० ॥

---

१ प्रेषया॰ वता॰ ॥ २ सूरो॰ पाता॰ ॥

सुभटः सुभटं हस्ती, हस्तिनं रथिनं रथी । आसदत् सादिनं सादी, बलयोरुभयोरपि ॥ २९१ ॥
छिन्नाः प्रोड्डीनकाण्डालीमण्डपेन रवेः कराः । पतिता इव भान्ति स्म, क्षितौ क्षतजकैतवात् ॥ २९२ ॥
उद्धूतधूलिजे ध्वान्ते, द्रष्टुं द्विष्टानिव क्रुधा । धावन्ति स्म भटाः भेह्लत्कुन्तदीपकपाणयः ॥ २९३ ॥
भुजाभृतां भुजादण्डैः, शिरोभिश्च क्षितिच्युतैः । कृतान्तकिङ्कराश्चक्रुर्दण्ड-कन्दुककौतुकम् ॥ २९४ ॥
ये तरस्वितया तेरुर्भटाः सङ्गरसागरम् । आसन् रुधिरवाहिन्यस्तेषामप्यतिदुस्तराः ॥ २९५ ॥
अश्वानामश्ववाराणामप्यङ्गमिलितैर्मिथः । शिरोभिः पतितैर्युद्धं, किन्नराणामिवैक्ष्यत ॥ २९६ ॥
दन्तिदन्तामसङ्घट्टजन्मा वह्निकणोत्करः । रेजे रजोघनध्वान्तखेलत्खद्योतपोतवत् ॥ २९७ ॥
प्रस्थानानि सुंयाहूनामिव प्रीताः सुरस्त्रियः । भटानां भाविभर्तॄणां, स्रजः कण्ठेषु चिक्षिपुः ॥ २९८ ॥
बिभ्रद्भिः शुशुभे खड्गलेखां धूमशिखासखीम् । रुषाऽरुणैर्भटैर्भर्तुर्मूर्तैस्तेजोऽनलैरिव ॥ २९९ ॥
अथ बाहुबलेः सैन्यैर्भरतेशस्य वाहिनी । कल्लोलिनीशकल्लोलैरिव पश्चाद् व्यधीयत ॥ ३०० ॥
पुरस्कृतसुषेणोऽथ, रणाय भरतेश्वरः । स्वयं रविरिवोत्तस्थेऽग्रेसरारुणसारथिः ॥ ३०१ ॥
युद्धश्रद्धालुमालोक्य, ज्यायांसं भ्रातरं पुरः । तुल्यं बाहुबलिर्भूपोऽभूदोकः शोक-हर्षयोः ॥ ३०२ ॥
गृहीतरणदीक्षोऽथ, प्रज्वलन्निव तेजसा । रवेः समः समारोहत्, कुञ्जरं राजकुञ्जरः ॥ ३०३ ॥
तौ स्वयं जगतीमल्लौ, वीक्ष्य युद्धोद्यतौ तदा । हन्त ! चेतांस्यकम्पन्त, त्रिविष्टपसदामपि ॥ ३०४ ॥
अथो भरतमभ्येत्य, दत्त्वाऽऽशीर्वादमादरात् । देवा एवमवोचन्त, प्रशान्तं स्वान्तशान्तये ॥ ३०५ ॥
षट्खण्डभरतक्षेत्रविजये तव सर्वतः । सम्मुखीनोऽभवत् कश्चिन्न चेन्नाभेयनन्दन ! ॥ ३०६ ॥
दोर्दण्डकण्डूभेदाय, तत् किं नाम महाभुज ! । निजेन बन्धुना सार्धं, युद्धसज्ज ! न लज्जसे ? ॥ ३०७ ॥
॥ युग्मम् ॥
अथाऽऽह चक्री गीर्वाणाः !, युक्तमेतद् भवद्वचः । किन्तु सम्यग् न जानीथ, बन्धुना रणकारणम् ॥३०८॥
न दोःकण्डूभरच्छेदबुद्धिर्युद्धे निबन्धनम् । हेतुः किन्तु रथाङ्गस्याप्रवेशः शस्त्रमन्दिरे ॥ ३०९ ॥
अनुप्रविश्य मां शस्त्रगृहे चक्रं प्रवेश्य च । षट्खण्डभरतक्षेत्रपतिर्भूयान्ममानुजः ॥ ३१० ॥
अनेन वचसा बाहुबलिं बोधयताधुना । यदि युद्धनिषेधाय, युष्माकमयमुद्यमः ॥ ३११ ॥
अथोचुस्ते पुनर्देवा, यद्यसौ नहि बुध्यते । तथापि नास्त्रैर्योद्धव्यमाज्ञाऽत्र ऋषभप्रभोः ॥ ३१२ ॥
दृष्टि-वाग्-दण्ड-दोर्दण्डयुद्धैरेव बलाबलम् । युवयोर्ज्ञास्यते किं तदायुधैर्दारुणै रणे ? ॥ ३१३ ॥
ओमित्युक्तवति क्ष्मापे, ततो जग्मुर्दिवौकसः । नृपं बाहुबलिं मूर्तमिव वीररसं प्रति ॥ ३१४ ॥
जयेत्याशिषमुद्दार्मी, दत्त्वा प्रीतेन चेतसा । सुधामधुमुचा वाचा, प्राहुर्बाहुबलिं सुराः ॥ ३१५ ॥
ज्यायानयं नयोत्तंस !, किं न सत्क्रियते त्वया ? । संरम्भः किमयं वीर !, भरतं प्रति सम्प्रति ? ॥ ३१६ ॥
जेया रागादयस्तावद्, ये युगादिजिनेशितुः । तदङ्गजस्य ते तात !, पोषस्तेषां किमु क्षमः ? ॥ ३१७ ॥
नतिमात्रेण यत् तोषं, भजत्येष तवाग्रजः । कथङ्कारं तमाराध्य, नात्मसात् कुरुषे क्षमाम् ? ॥ ३१८ ॥
अथ बाहुबलिः प्राह, सुरान् गम्भीरया गिरा । इत्थं कथमविज्ञातवस्तुतत्त्वैरिवोच्यते ? ॥ ३१९ ॥
यद्यसौ भ्रातृभावेन, मत्तः सत्कारमिच्छति । युक्तं तदेष यत् तातसम एव ममाग्रजः ॥ ३२० ॥
परं प्रौढमतापत्याञ्जितकाशितया तया । आक्रम्य नमयेद् यन्मां, न तदेतदहं सहे ॥ ३२१ ॥

१ स्वया संता० ॥

वैवस्वदश्ववित्रासी, शशिसारङ्गभङ्गकृत् । चक्रिणा सिंहनादोऽथ, लोडितः क्रोडिताम्बरः ॥ ३५३ ॥
चमत्कारिणि विश्वानां, विरते भरतध्वनौ । सिंहनादो महान् बाहुबलिनो व्यानशे दिशः ॥ ३५४ ॥
क्षयाब्दगर्जिसंवादे, नादे तस्मिन् विसर्पति । अभूदकालकल्पान्तशङ्कातङ्कातुरं जगत् ॥ ३५५ ॥
क्षुभ्यत्पर्वतखण्डेन, क्षुभ्यदम्भोधिनाऽधिकम् । विजिग्ये तेन शब्देन, भूयो भरतभूपतिः ॥ ३५६ ॥
अथ हस्तप्रहारेण, रणं निश्चित्य दुर्मदौ । तावपासरतां शक्तिधन्यौ वन्यौ गजाविव ॥ ३५७ ॥
भरतेनाऽऽहतः प्राणपुष्ट्या मुष्ट्याऽथ मूर्धनि । क्षणं बाहुबलिर्ध्वान्तैर्वव्रे रविरिवाम्बुदैः ॥ ३५८ ॥
सद्वृत्तस्येव कौलीनं, मुनेर्मन्युरिव क्षणात् । ययौ शशधरस्येव, राहुर्बाहुबलेस्तमः ॥ ३५९ ॥
ततो बाहुबलेर्मुष्टिवज्रपातेन ताडितः । पपात शैलवच्चक्री, समं सैन्यमनोरथैः ॥ ३६० ॥
बन्धुना चन्दनस्यन्दैः, सिक्तश्चन्द्रकरैरिव । कैरवाकरवन्मूर्च्छामथामुञ्चत चक्रभृत् ॥ ३६१ ॥
निश्चित्याथ प्रचण्डेन, दण्डेन समरोत्सवम् । अधावतामुभौ भीष्मौ, धृतदण्डौ यमाविव ॥ ३६२ ॥
ततः शिरसि दण्डेन, हतो भरतभूभुजा । सुनन्दासूनुराजानु, ममज्ज भुवि कीलवत् ॥ ३६३ ॥
अथ मग्नौ क्रमौ तस्माद्, भूतलात् पङ्किलादिव । लीलयैव क्रमेणायमुद्दधार धराधवः ॥ ३६४ ॥
तद् बाहुबलिना मौलौ, दण्डेन भरतो हतः । ममज्ज लज्जयेवोच्चैराकण्ठमवनीतले ॥ ३६५ ॥
बभूव क्षितिमग्नस्य, चक्रिणः स्फुटमाननम् । शोकश्यामं निजयशःशशिग्रासेन राहुवत् ॥ ३६६ ॥
मग्नो गर्तादथाकर्षि, चक्री कोद्दालिभिर्भटैः । उत्तमर्णैरिव प्रत्तदेयवित्तोऽधमर्णकः ॥ ३६७ ॥
आससाद विषादस्तद्, भरतं परितो जितं । चक्री नाहमसौ चक्री, ध्यायन्तमिति चेतसि ॥ ३६८ ॥
अथाकस्मात् करेऽमुष्य, चक्रित्वभ्रान्तिभित्तये । आरुरोह ज्वलच्चक्रं, रविबिम्बमिवाम्बरे ॥ ३६९ ॥
तेन पार्श्वगतेनोच्चैश्चक्री चक्रेण सोऽज्वलत् । मार्तण्डमण्डलेनेव, मार्तण्डोपलपर्वतः ॥ ३७० ॥
अथ ज्योतिःपथे मुस्थाँस्त्रासयँस्त्रिदिवौकसः । वधाय बन्धोर्निःशङ्कश्चक्री चक्रं मुमोच तत् ॥ ३७१ ॥
कल्याणशालिनो बाहुबलेर्मेरोरिव व्यधात् । चक्रं प्रदक्षिणाचक्रं, चक्रबान्धवबिम्बवत् ॥ ३७२ ॥
गोत्रे न प्रभवत्येव, चक्रमित्यवलिष्ट तत् । अमोघमप्यनिष्पन्नचक्रवर्तिमनोरथम् ॥ ३७३ ॥
सस्मयं भस्मयिष्यामि, सचक्रं चक्रवर्तिनम् । इत्युत्पाट्य क्रुधा मुष्टिं, सुनन्दाभूरधावत ॥ ३७४ ॥
गतो यत्नं हहा ! चक्रवर्त्यसौ समवर्तिनः । ईदृक् कलकलारावो, बभाराम्बरगह्वरम् ॥ ३७५ ॥
अत्रान्तरे विवेकार्कतेजःशाम्यन्मनस्तमाः । दध्यौ प्रवीरतामानी, मानी नाभेयसम्भवः ॥ ३७६ ॥
जगतीं जिष्णुरप्येष, योधैः क्रोधादिभिर्जितः । तदन्यविजितं जेतुमेतं धिग् ! धिग् ! ममोद्यमम् ॥ ३७७ ॥
सज्जयामि यदि मेतानेतान् जितजगत्त्रयान् । सत्यं तत्तनुजन्माऽस्मि, तस्य विश्वप्रभोरहम् ॥ ३७८ ॥
स ध्यात्वेति नवद्वारे, पुरे तेषां सदास्पदे । शिरःपरिसरादुच्चखान तत् केशकाननम् ॥ ३७९ ॥
निवार्य सर्वव्यापारानसौ निश्चलनिश्चयः । स्वतप्रस्तत्र पाना-ऽन्नप्रवेशमरुधत् ततः ॥ ३८० ॥
यन्मवो लघवः सर्वे, केवलज्ञानशालिनः । कथं वन्द्या मया साक्षाद्, गत्वा तातस्य सन्निधौ ! ॥ ३८१ ॥
तत् प्राप्य केवलज्ञानमिहैवानन्दमन्दिरम् । मूत्वा समः स्वबन्धूनां, गन्ताऽहं तातसंसदि ॥ ३८२ ॥
निश्चित्येति चिरं चित्ते, तत्रैव कृतवान् कृती । कायोत्सर्गविधिं मोहमहीपतिजयोर्जितः ॥ ३८३ ॥

---

१ 'भ्यत्पायोधिना' संता० ॥ २ 'राहुच' पाता० ॥

तं तथास्थितमालोक्य, बान्धवं वसुधाधवः । विषण्णः कर्मणा स्वेन, बाष्पाविलविलोचनः ॥ ३८४ ॥
धिगेतच्चक्रवर्तित्वं, बन्धुभिर्विरहो यतः । किं तेन काञ्चनेनापि, येनाऽऽशु त्रुटति श्रुतिः ? ॥ ३८५ ॥
मन्ये धन्यमहं काकं, साकं यः स्वजनैर्निजैः । अप्यल्पां बलिमादत्ते, नात्मानं त्यक्तबान्धवम् ॥ ३८६ ॥
या निजैर्बन्धुभिः साकं, संविभज्य न भुज्यते । पुंसः श्रियमिमां मेने, विधिर्व्याधिमिव व्यधात् ॥ ३८७ ॥
इति ध्यायन् विषण्णात्मा, बन्धुमध्यात्मबन्धुरम् । निपत्य पादयोश्चक्री, निजगाद सगद्गदम् ॥ ३८८ ॥
सूनुस्त्वमेव तातस्य, नाहं हतकविक्रमः । वध्ये मयि दयालुर्यः, शमं सोम ! समासदः ॥ ३८९ ॥
हतकोऽहं पुरा मुक्तः, समग्रैरपि बन्धुभिः । एकं त्वमपि मुञ्चन् मां, तात ! मा कृपणं कृथाः ॥ ३९० ॥
तात ! राज्यमिदं पातु, ताततुल्यगुणो भवान् । चक्रवर्त्यपि वर्तिष्ये, तवाहं वाहनोपमः ॥ ३९१ ॥
स्वचेष्टिताग्निसन्तप्ते, मुञ्च वागमृतच्छटाम् । मयि प्रलपति भ्रातर् !, दयाकर ! दयां कुरु ॥ ३९२ ॥
वदन्निति नतश्चक्री, सचिवैरुच्यते स्म सः । नाथ ! बाहुबलिः सोऽयं, न वक्ता निश्चितव्रतः ॥ ३९३ ॥
इति तद्वचनैश्चक्री, जानन् बान्धवनिश्चयम् । उन्मुखः साश्रुदृक् पादन्यस्तहस्तोऽवदत् पुनः ॥ ३९४ ॥

न चेद्दास्यसि तन्मा दा, वाचं वाचंयमाग्रणीः ! ।
किं प्रसन्नाक्षिदानेऽपि, काऽपि स्यादवकीर्णता ? ॥ ३९५ ॥

अथ तुष्टिसुधावृष्ट्या, दृष्ट्या किञ्चिन्मुनीश्वरः । अपश्यद् भरतं हर्षोदञ्चिरोमाञ्चकञ्चुकम् ॥ ३९६ ॥
अथ नेत्राम्बुसम्पातनिर्धौतौ श्रमिनः क्रमौ । केशपाशेन सम्मार्ज्य, निर्ययौ भरतेश्वरः ॥ ३९७ ॥
ततः सोमयशाः सोमयशा बाहुबलेः सुतः । स्वयं तक्षशिलाराज्ये, भरतेनाभ्यषिच्यत ॥ ३९८ ॥
ततः समं समग्रेण, बलेन नरेन्द्रांबरः । ययावयोध्यां चक्रं च, विवेशायुधवेश्मनि ॥ ३९९ ॥

इति जितपुरुहूतः पुण्यसंहूतसम्प-
त्परिचयचयमास्वद्भाग्यसौभाग्यलक्ष्मीः ।
अनिलचलितचेलोत्सेधमेध्यामयोध्या-
मविशदविशदात्मा बन्धुभिर्विप्रयोगात् ॥ ४०० ॥

॥ इति श्रीविजयसेनसूरिशिष्यश्रीमदुदयप्रभसूरिविरचिते श्रीधर्माभ्युदयनाम्नि श्रीसङ्घपतिचरिते लक्ष्म्यङ्के महाकाव्ये श्रीभरतदिग्विजय-बाहुबलिव्रतवर्णनो नाम चतुर्थः सर्गः समाप्तः ॥

त्रिजगति यशसस्ते तस्य विस्तारभाजः,
कथमिव महिमानं ब्रूमहे वस्तुपाल ! ।
सपदि यदनुभावस्फारितस्फीतमूर्ति-
र्विधुरगिलदरातिं बाहुमाहुस्तमङ्कम् ॥ १ ॥

॥ ग्रन्थाग्रम् ४०४ ॥ उभयम् १२४९ ॥

---

१ साधं, सं° संता° पाता° ॥ २ दयाङ्कुर ! पाता° ॥ ३ °म् १२३७ पाता° ॥

# पञ्चमः सर्गः ।



इतश्च सत्त्वावष्टम्भनिस्तरङ्गीकृताकृतिः । तस्थौ बाहुबलिर्ध्यानबद्धनिश्चलनिश्चयः ॥ १ ॥
ततः क्षमाभृतां नाथे, तत्र त्रैलोक्यजित्वरे । क्रुधा हैमनवातास्त्रं, हिमालय इवामुचत् ॥ २ ॥
ज्वलच्छ्यानानलध्वस्तजाड्यज्वरविजृम्भिते । तस्मिन् हेमन्तमाहात्म्यं, तदेतन्मोघतां गतम् ॥ ३ ॥
स्वनामधेयचौराणां, तपसां वासदायिनः । बाधामाधातुमेतस्य, माघमासः समासदत् ॥ ४ ॥
लोहं वज्रे खलः साधौ, ग्रीष्मकाल इवोदधौ ।
दधौ तपोनिधौ तस्मिन्, शिशिरः फल्गु वल्गितम् ॥ ५ ॥
चक्रिणाऽप्यजितं बाहुबलिं जेतुमिवोत्सुकः । पुष्पमासं पुरश्चक्रे, पुष्पेषुस्त्रिजगज्जयी ॥ ६ ॥
भ्रमद्भ्रमरधूमाढ्यैः, किंशुका-ऽशोक-चम्पकैः । मधुः कुसुमबाणस्य, ज्वलनास्त्रनिभैर्बभौ ॥ ७ ॥
जितमोहमहीनाथे, तस्मिन् मथितमन्मथे । मधोः किं नाम कुर्वन्तु, सायकाः शीर्णनायकाः ? ॥ ८ ॥
अजितेऽथ स्मरेणास्मिन्, मुनौ चक्रिविजित्वरे ।
भीष्मो ग्रीष्मो दयाञ्चक्रे, चक्रबन्धुः पराक्रमम् ॥ ९ ॥
करानथ किरत्यर्के, खादिराङ्गारदारुणान् । अभूद् बाहुबलिः कामं, प्रशमामृतवारिदः ॥ १० ॥
जगज्जनानुरागेण, स्फूर्जतेव समन्ततः । मुनिरासीत् किलाऽऽताम्रो, न पुनस्तपनातपात् ॥ ११ ॥
पश्यन्नस्य तपस्तीव्रमामेयास्त्रमिवोदितम् । रविरुल्लासयामास, जलदास्त्रं तपात्यये ॥ १२ ॥
चक्रिदण्डनिपातं यस्तृणायापि न मन्यते । प्रभवन्तु कुतस्तस्मिन्, धारादण्डाः पयोमुचाम् ? ॥ १३ ॥
कदमतिज्ञाभारोऽयं, न वोढुं शक्यते मया । इतीव पन्नगेन्द्रेण, प्रेरिताः फणिनां गणाः ॥ १४ ॥
रसातलोद्गताः श्यामाः, कुटिलैर्भ्रान्तिशालिनः । दध्रुः सर्वाङ्गमुल्लास्य, तं लतातति‍कैतवात् ॥ १५ ॥
॥ युग्मम् ॥
शिलीमुखगणैर्बाणासनान्तर्विनियोजितैः । तस्य क्षोभाय संरम्भमथाऽऽरेभे घनात्ययः ॥ १६ ॥
अथ सत्त्वाद्भुतेनास्य, जलैरप्यमलाशयैः । अहासि शरदि प्रीतैर्विकस्वरमुखाम्बुजैः ॥ १७ ॥
शुक्लध्यानेऽमुनाऽऽरब्धे, अष्टकेकिच्छदच्छलात् । शेषध्यानमहांसीव, महीपीठे शुचाऽलुठत् ॥ १८ ॥
मुनेर्यशः-प्रतापाभ्यामिव नैर्मल्यमर्जितम् । क्रमादम्बुदमुक्तेन्दु-भानुमन्मण्डलच्छलात् ॥ १९ ॥
अथ सम्प्रेषिते ब्राह्मी-सुन्दर्यौ नाभिसूनुना । ज्ञानाधीशप्रवेश्यार्हत्तन्मनःसौधशुद्धये ॥ २० ॥
कुञ्जरादुत्तर भ्रातः !, वाच्यमेतदिति प्रभुः । शिक्षां ददौ तयोर्यान्त्योर्ज्ञानश्रीकृत्रिमप्रवत् ॥ २१ ॥
स्थानं तदथ ते याते, न मुनीशमपश्यताम् । ददृशे गुल्मवत्तु वल्लीनां, सोच्छ्वासः पुरुषाकृतिः ॥ २२ ॥
तत्र सम्भाव्य तं ताभ्यामुक्तां शुश्राव तां गिरम् । पार्श्वस्थगुप्तकैवल्यलक्ष्मीकर्णेजपां मुनिः ॥ २३ ॥

---

१ "लदनाघनध्वस्त" संता० ॥ २ "धर्मवि" संता० पाता० ॥ ३ "वारिधिः संता० ॥
४ "ला भ्रा" संता० ॥

आतरुत्तर मातङ्गादित्याकर्ण्य तयोर्वचः । चिन्ताचान्तमतिर्भ्रान्तस्तस्थिवान् स मुनिश्चिरम् ॥ २४ ॥
शब्दोऽयं नियतं ब्राह्मी-सुन्दर्योः श्रुतिसुन्दरः । भाषेते चानृतं नैते, न चारूढोऽस्मि हस्तिनम् ॥ २५ ॥
विकल्पं कल्पयन्नेवं, दध्यौ वन्दे लघून् न यत् ।
मानोऽयमेव मे हस्ती, तत्राऽऽरूढोऽस्मि धिग् ! जडः ॥ २६ ॥
सत्यं मत्वेति तातेन, दयां मयि वितन्वता । व्रतिन्यौ प्रतिबोधाय, प्रेषिते शीलसद्मनी ॥ २७ ॥
केवलज्ञानिनो बन्धून्, लघूनपि गुणाधिकान् । करिष्ये तदहं मूर्ध्नि, पुष्पस्तोमानिवामलान् ॥ २८ ॥
ध्यात्वेति पादमुद्यम्य, भिन्ने मानमतङ्गजे । अलाभि मुनिसिंहेन, केवलं मौक्तिकं फलम् ॥ २९ ॥
मानेऽथ सर्वथा मुक्ते, स्फुरन्त्या केवलश्रिया । आश्लिष्टस्य तदा तस्य, विलीनं मनसा रसात् ॥ ३० ॥
दिवि दुन्दुभयो नेदुरभवन् पुष्पवृष्टयः । मासास्तं वन्दितुं भक्तिभासुराश्च सुरा-ऽसुराः ॥ ३१ ॥
अथो परिवृतः श्रीमान्, सुरसार्थैर्महामुनिः । जगदीशस्य समवसरणं प्राप पापभित् ॥ ३२ ॥
प्रभुं प्रदक्षिणीकृत्य, गत्वा केवलिपर्षदि । उपाविक्षन्मुनिर्मुक्तालतायामिव नायकः ॥ ३३ ॥
आरुरोहान्यदा स्वामी, स्पष्टमष्टापदाचलम्[1] । समं मुनीन्द्रैः पूर्वाद्रिं, नक्षत्रैरिव चन्द्रमाः ॥ ३४ ॥
त्रिविष्टपसदस्तत्र, विदधुर्देशनासदः[2] । प्रभुश्चतुर्मुखीभूय, तस्मिन् धर्ममुपादिशत् ॥ ३५ ॥
ततः समं समायातौ, भरतेश-सुरेश्वरौ । निन्यतुः कर्णपूरत्वं, विभोर्वचनपल्लवान् ॥ ३६ ॥
देशनान्ते ततश्चक्री, बन्धूनालोक्य वत्सलः । तेषां भोगविभागाय, जिनराजं व्यजिज्ञपत् ॥ ३७ ॥
अथाऽऽदिशज्जिनाधीशो, भरतक्ष्मापतिं प्रति । भोगानभिलषन्त्येते, किमभङ्गुरसङ्गराः ? ॥ ३८ ॥
आनाय्य न्याय्यवित् क्षोणीपती रसवतीमथ । हेतवे निजबन्धूनामन्धूनां प्रशमाम्भसः ॥ ३९ ॥
विज्ञो विज्ञपयामास, सानन्दो नाभिनन्दनम् ।
भोजनायाऽऽदिश स्वामिन् !, शमिनो बान्धवानिति ॥ ४० ॥ युग्मम् ॥
आदिदेशाथ तीर्थेशः, कारितं कल्पते न यत् । भुञ्जते तत् कुतो ज्ञानबन्धुरास्तव बन्धवः ? ॥ ४१ ॥
पुनर्विज्ञपयामास, नृपस्तर्हि जगत्प्रभो ! । स्वामिन्नकारितान्नाय, प्रेष्यन्तां मद्गृहानमी ॥ ४२ ॥
तमादिदेश तीर्थेशो, यथार्थमथ पार्थिवम् । राजन् ! न कल्पते राजपिण्डः शमभृतामिति ॥ ४३ ॥
नरेन्द्रेऽस्मिन् जिनेन्द्रेण, निषिद्धे सर्वथेत्यथ । पराभवभवन्मानम्लानिश्यामलिताननं ॥ ४४ ॥
माऽसौ खेदस्य पात्रं, भूदित्यवेत्य मरुत्वता । अवग्रहभिदाः पृष्टः, स्पष्टमूचे जगद्गुरुः ॥ ४५ ॥
॥ युग्मम् ॥
शक्रस्य चक्रिणो राज्ञः, स्थानेशस्य गुरोरिति । पञ्चधाऽवग्रहो भावात्, पञ्चानामपि पुण्यकृत् ॥ ४६ ॥
अथ शक्रः प्रणम्याऽऽह, प्रभो ! क्षेत्रेऽत्र भारते । मया वासाय साधूनां, प्रदत्तोऽयमवग्रहः ॥ ४७ ॥
आकर्ण्य भरतोऽपीति, प्रीतो नत्वा जगद्गुरुम् । अनुजज्ञे निवासाय, साधूनां भारतीं भुवम् ॥ ४८ ॥
अथापृच्छन्महीभर्ता, द्युमर्तारं ससम्मदः । देयं कस्यान्नमानीतमिदमेवं निवेद्यताम् ॥ ४९ ॥
गुणाधिकेषु कर्तव्या, पूजेत्युक्ते बिडौजसा ।
साधून् विना गुणी कोऽस्ति, मत्तोऽपीति व्यचिन्तयत् ॥ ५० ॥
ज्ञातं सन्तितरां सन्तः, श्रावका मद्गुणाधिकाः । तेभ्यः पूजा विधेयेति, निश्चयं भरतो व्यधात् ॥ ५१ ॥

१ आरोहदन्य° संता० ॥ २ समासदः संता० ॥

अथ प्रणम्य तीर्थेशं, ययौ दिवि दिवस्पतिः । भरतस्तु विनीतायां, पुर्यां धुर्यो मनस्विनाम् ॥ ५२ ॥

अन्यतो विजहाराथ, प्रभुरष्टापदाचलात् ।
निर्दम्भं लम्भयन् लक्ष्मीं, पुराम्भोजानि भानुवत् ॥ ५३ ॥

भरतोऽपि रतो धर्मे, श्राद्धानाहूय भूरिशः । इदं जगाद भोक्तव्यं, भवद्भिर्मम मन्दिरे ॥ ५४ ॥

क्रियासु कृषिमुख्यासु, कार्यं चेतोऽपि न क्वचित् । भवद्भिः केवलं भाव्यं, धर्मकर्मैककर्मठैः ॥ ५५ ॥

इदं च पाठ्यं निःशाठ्यं, भोजनान्ते मैदग्रतः । वैर्तते भीर्भवान् जिग्ये, ततो मा हन मा हन ॥ ५६ ॥

मत्वेदमथ ते श्राद्धा, भवने तस्य भुञ्जते । पठन्ति च वचस्तत् ते, सम्मोहगरगारुडम् ॥ ५७ ॥

प्रमादी मेदिनीशोऽपि, मग्नो रतिमहानदे । नित्यमाकर्ण्य तद् वाक्यं, विचिन्तयति किञ्चन ॥ ५८ ॥

अहं केन जितो? ज्ञातं, कषायैस्तेभ्य एव भीः । वैर्तते दुर्धरा तेन, न घात्याः प्राणिनो मया ॥ ५९ ॥

नित्यं ते स्मारयन्तीति, नीतिशक्राय चक्रिणे । विरागसागरोल्लासनिशाकरनिभं वचः ॥ ६० ॥

प्रमादपादपाकीर्णे, तस्मिन् भरतभूभृति । पावनैस्तद्गिरां पूरैर्धर्मध्यानानलोऽज्वलत् ॥ ६१ ॥

श्राद्धा-ऽश्राद्धाविवेकज्ञैस्तदाऽध्यक्षैर्निवेदिते । चैक्री चक्रे परीक्षां तदणु-शिक्षा-गुणव्रतैः ॥ ६२ ॥

श्रावकाणां तदा चक्रे, निर्व्यूढानां परीक्षणे । रेखात्रयं स काकिण्या, रत्नत्रितयसूचकम् ॥ ६३ ॥

स्वाध्यायहेतवे तेषां, वेदानार्यान् नृपार्यमा । स चकार परार्था हि, प्रवृत्तिः स्यान्महात्मनाम् ॥ ६४ ॥

अथान्तरेऽस्य तीर्थस्य, व्यवच्छेदे कदाग्रहात् । अनार्यत्वममी मोहान्मिथ्यात्वं च प्रपेदिरे ॥ ६५ ॥

इतश्च भगवानष्टापदमापदमंहसाम् । आययाविति विज्ञाय, वन्दितुं गतवान् नृपः ॥ ६६ ॥

नत्वा तत्र जगन्नाथं, प्राञ्जलिर्जगतीपतिः । कथां शलाकापुरुषत्रिषष्टेरपि सोऽशृणोत् ॥ ६७ ॥

अथ विज्ञपयामास, स्वामिनं भरतेश्वरः ।
अस्यां सभायां कोऽप्यस्ति, प्रभो ! भावी समस्त्वया ? ॥ ६८ ॥

अथ प्रथमतीर्थेशः, प्रोवाच भरतेश्वरम् । यस्त्वत्पुत्रोऽग्रहीद्दीक्षां मरीचिर्मत्पुरः पुरा ॥ ६९ ॥

स दीक्षाभारमुद्वोढुमशक्तः सुखलालसः । छत्रमावारकं बिभ्रत्, कर्म मूर्तमिवात्मनः ॥ ७० ॥

सकषायोऽहमित्युच्चैः, कषायवसनान्वितः । त्रिदण्डदण्डितश्चाहमिति दण्डत्रयं वहन् ॥ ७१ ॥

न स्वभावसुगन्धोऽहमिति श्रीखण्डमण्डितः । पारिव्राज्यं किलाऽऽदत्त, नोल्लङ्घ्या भवितव्यता ॥ ७२ ॥

॥ विशेषकम् ॥

ततोऽनुपदिकोऽस्माकं, विहरन्नेष भूपते ! । नवीनरुचिभिर्लोकैः, पृष्टो धर्ममवोचत ॥ ७३ ॥

महाव्रतानि पञ्च स्युः, श्रमणानां महात्मनाम् ।
मुख्यो मोक्षस्य मार्गोऽयमशक्तौ श्रावको भवेत् ॥ ७४ ॥

अणुव्रतानि पञ्च स्युः, सप्त शिक्षाव्रतानि च । श्राद्धेन पालनीयानि, यदीच्छाऽनुपमे सुखे ॥ ७५ ॥

प्रतिबुद्ध्याथ तन्मध्यात्, संसारोद्वेगशालिनः । श्राद्धानामथ साधूनामयाचन्त व्रतानि ये ॥ ७६ ॥

स तानाह ततानाहमशक्तो हीदृशे व्रते । पारिव्राज्यमिदं मन्दमतिस्तद् गच्छत प्रभुम् ॥ ७७ ॥

---

१ भूयसः खंता० पाता० ॥ २ ममाग्रे पाता० ॥ ३ वर्धते खंता० पाता० ॥ ४ वर्धते खंता० पाता० ॥ ५ अणु-शिक्षाव्रतैश्चक्रे, परीक्षां भरतोऽन्यदा इतिरूपमुत्तरार्धं पाता० ॥ ६ °रताधिपम् खंता० पाता० ॥ ७ मुमुक्षोर्मोक्षमार्गो खंता० ॥

यथोचितमथो चक्रुर्मत्य भवभीरवः । जनास्ते यत्प्रवृत्तिः स्याद्, यथा स्वार्थमिहार्थिनाम् ॥ ७८ ॥
एवं विहरमाणोऽयमस्माभिः सह सम्प्रति । इतः स भवतः पुत्रो, धर्मध्यानमना मुनिः ॥ ७९ ॥
सुरा-ऽसुरशिरःश्रेणिमणिभासुरितक्रमः । भावी मम समानश्रीश्चतुर्विंशो जिनेश्वरः ॥ ८० ॥ युग्मम् ॥
भरतोऽथ समुत्थाय, मरीचिं निकषा गतः । एनं प्रदक्षिणीकृत्य, नमश्चक्रे कृताञ्जलिः ॥ ८१ ॥
उक्तवाँश्च न ते पारिव्राज्यमेतन्न जन्म च । किन्तु यत् तीर्थकृत्त्वं ते, भावि तद् वन्द्यते मया ॥ ८२ ॥
भगवन्तमथो नत्वा, गतवान् भरतेश्वरः । विजहार च तीर्थेशोऽन्यतो वायुरिवास्खलन् ॥ ८३ ॥
अथ लोकस्य दुःकर्मशत्रूच्छेदाय तीर्थकृत् । पुनानः पृथिवीं पादैः, शत्रुञ्जयगिरिं ययौ ॥ ८४ ॥
तं विलोक्य त्रिलोक्यन्तर्दुर्मस्योच्चैः क्षमाभृतः । दुर्गप्रायगिरिं मेने, मुनीन्द्रो निरुपद्रवम् ॥ ८५ ॥
अथ प्रथमसर्वज्ञः, स विज्ञाय जगद्गुरुः । नगेन्द्रमिह माहात्म्यनिधानमिव पिण्डितम् ॥ ८६ ॥
समारोहन्महामोहद्रोहाय परमेश्वरः । शत्रुवित्रासनायेव, कुञ्जरं वीरकुञ्जरः ॥ ८७ ॥ युग्मम् ॥
मुनयः पुण्डरीकाद्याः, सहैवाऽऽरुरुहुर्गिरिम् । सोपानमिव निर्वाणसौधस्यात्यन्तमुत्सुकाः ॥ ८८ ॥
बभौ स तं समारूढः, शैलं त्रैलोक्यनायकः । मुक्तिद्वीपमिव प्राप्तस्तीर्त्वा संसारवारिधिम् ॥ ८९ ॥
पिङ्गः प्रभोः प्रभाभारैः, कीर्णः कुसुमवृष्टिभिः । ताराभाराकुलस्वर्गशैललीलामगाद् गिरिः ॥ ९० ॥
पवित्रयति मूर्धानं, तदा त्रिजगतीगुरौ । प्रमावप्रणमद्वृक्षभुजाग्रैर्नृत्यति स्म सः ॥ ९१ ॥
प्रभुदृष्ट्या सुधावृष्ट्या, पुनः प्ररूढपक्षतिः । अभितः स समारोहल्लोललोकनिभादभात् ॥ ९२ ॥
विबुधास्त्रिविधास्तूर्णं, देवं सेवितुमाययुः । स्वस्थानस्था निरायासं, ज्योतिष्कास्तु सिषेविरे ॥ ९३ ॥
जन्तूनां पापभीतानां, दुर्गभूतस्य भूभृतः । मौलौ वप्रत्रयं रत्न-स्वर्ण-रूप्यैः सुरा व्यधुः ॥ ९४ ॥
प्राकारद्वारदम्भेन, सज्जितानि कुतूहलात् । दिव्यभूभिर्मुखानीव, स्मेराणि जिनमीक्षितुम् ॥ ९५ ॥
सर्वतः पर्वतेष्वेकः, पवित्रोऽहमिति ब्रुवन् । अशोकानोकहव्याजादयमूर्द्ध्वं व्यधाद् भुजम् ॥ ९६ ॥
माहात्म्येन महीध्रेषु, गिरिर्गुरुरसाविति । रत्नसिंहासनव्याजादस्योष्णीषं व्यधुः सुराः ॥ ९७ ॥
चतुर्मूर्तिभृतस्तत्र, स्थितस्याऽऽस्येन्दुभिर्विभोः । स जज्ञे पर्वतः पूर्वः, सर्वासामप्यसौ दिशाम् ॥ ९८ ॥
तद्देशनां समारेभे, स मारेभैककेसरी । विभुर्भविकलोकानां, कर्णामृतकिरा गिरा ॥ ९९ ॥
महीरुहेषु कल्पद्रुः, स्वयम्भूरमणोऽब्धिषु । ज्योतिष्केषु रविः सोऽयं, शैलः शैलेषु शस्यते ॥ १०० ॥
तुङ्गतां सर्वतः सर्वपर्वतेषु दधात्ययम् । यन्मौलिवर्तिनां हस्तप्राप्यं मुक्तिलताफलम् ॥ १०१ ॥
जलकान्तमणिश्रेणिमयवत् प्रतिभात्ययम् । विघटन्ते झटित्येव, भवाब्धेर्यत्र वीचयः ॥ १०२ ॥
नृणामिहाधिरूढानां, शुक्लध्यानविभानिभात् । हस्तावलम्बनं दत्ते, मुक्तिश्रीः कुन्दसुन्दरा ॥ १०३ ॥
भ्रूण-ब्रह्मर्षिघातादिपातकान्यपि तत्क्षणात् । व्यपोहत्यस्य महिमा, हिमानीवाहिमत्विषः ॥ १०४ ॥
व्यक्तं विमुक्तकाठिन्यमिह क्रूरात्मनां मनः । प्रयाति खादिराङ्गारकुण्डेऽयस्पिण्डवद् द्रवम् ॥ १०५ ॥
अतः शमसुधाकुण्ड !, पुण्डरीक ! त्वयाऽऽस्यताम् ।
अस्मिन् धराधरे सिद्धिलोलुभैः साधुभिः समम् ॥ १०६ ॥
इत्यासाद्य प्रभोराज्ञां, पादौ नत्वाऽत्र भूधरे । अस्थायि पुण्डरीकेण, मुनिहंसैः सहामलैः ॥ १०७ ॥

---

१ 'रत्नरश्रेणि' मता० ॥ २ समद्रिमिद पाता० ॥ ३ °मिवोत्तीर्णस्ती° संता० ॥ ४ °ऽद्रिषु मता० ॥

तत‌श्च विहृतेऽन्यत्र, जगत्रितयनेतरि । शुचाऽशुचदयं शैलः, शालादिमणिमण्डनम् ॥ १०८ ॥
तत्रादिगणभृद् दुर्गे, श्रीजिनेशनिदेशतः । सहितः साधुभिस्तन्त्रैस्तन्त्रपाल इव स्थितः ॥ १०९ ॥
तदुवाच मुदा साधूनग्रणीर्गणधारिणाम् । मनःसंवेगसंवेगगौरगौरवया गिरा ॥ ११० ॥
तपःश्रीदूतिकाकृष्टसिद्धिसम्बन्धकाङ्क्षिणाम् । कोऽपि केवलसङ्केतनिकेतनमयं गिरिः ॥ १११ ॥
अस्मिन्नाकारणं मुक्तेस्तद्वः केवलमेष्यति । तदात्मा तपसा शुद्धो, वास्यतां ध्यानसौरभात् ॥ ११२ ॥
इति संवेगसश्रीकपुण्डरीकगिरा चिरात् । सर्वेऽप्यालोचनारोचमाना मानादिमाथिनः ॥ ११३ ॥
क्षणक्षामितनिःशेषजन्तवोऽनन्तबोधयः । कर्मदानवभेदाय, साधवो माधवोपमाः ॥ ११४ ॥
गृहीतानशनाः शुक्लध्याननिर्धौतकल्मषाः । बभूव भूभृतस्तस्य, ते लीलामौलिमण्डनम् ॥ ११५ ॥
॥ विशेषकम् ॥

गणभृन्मुक्तिनिःश्रेणिं, क्षपकश्रेणिमाश्रितः । तैः सार्द्धं साधुभिर्लेभे, द्वादशीं गुणभूमिकाम् ॥ ११६ ॥
मासान्ते चैत्रराकायामथ प्रथमतोऽभवत् । केवलं पुण्डरीकस्य, ततोऽन्येषां तपोभृताम् ॥ ११७ ॥
अथैतान् मुक्तिवनिता, नितान्तमनुरागिणी । निर्मुक्तकर्मावरणानात्मसादकृत स्वयम् ॥ ११८ ॥
गीर्वाणास्तत्र निर्वाणगमनोत्सवमुत्सुकाः । आगत्य चक्रिरे तेषां, हर्षसोत्कर्षचेतसः ॥ ११९ ॥
तदेष प्रथमं तीर्थं, शत्रुञ्जयधराधरः । बभूव पुण्डरीकादिसाधुसिद्धिनिबन्धनम् ॥ १२० ॥
तत्र रत्नमयं चैत्यमुदितं मुदितो व्यधात् । उदयाद्रिशिरश्चुम्बिरविबिम्बविडम्बकम् ॥ १२१ ॥
जितस्तेनैव चैत्येन, प्रभया सुरभूधरः । मस्वेदबिन्दुसन्दोहं, धत्ते तारावलिच्छलात् ॥ १२२ ॥
पुण्डरीकप्रभोर्मूर्त्या, युतामत्र नृपो व्यधात् । युगादिजिननाथस्य, प्रतिमां मतिमानसौ ॥ १२३ ॥
विहरन्नथ देशेषु, विविधेषु जगद्गुरुः । भविनां मुक्तिमार्गाय, धर्मं युग्यमिवार्पयन् ॥ १२४ ॥
पूर्वलक्षं परिक्षिप्य, दीक्षाकालात् त्रिकालवित् । निर्वाणकालं विज्ञाय, स्पष्टमष्टापदं ययौ ॥ १२५ ॥
॥ युग्मम् ॥

अष्टापदाद्रिमारूढः, परीतः स्फटिकांशुभिः । शुशुभे स विभुः शुभ्रैः, सिद्धेरालोकजैरिव ॥ १२६ ॥
मत्यपद्यत साधूनां, सहस्रैर्दशभिर्युतः । चतुर्दशतपोयोगात्, पादपोपगमं जिनः ॥ १२७ ॥
तथाऽवस्थितमद्रीन्द्रपालो व्यालोक्य तं प्रभुम् । गत्वा विज्ञपयामास, भरतं भूमिवासवम् ॥ १२८ ॥
श्रुत्वा चतुर्दशाहारपरिहारं जगद्गुरोः । न चतुर्दशभिर्भेजे, रत्नैरपि नृपः सुखम् ॥ १२९ ॥
ततश्चरणचारेण, चचाल भरतेश्वरः । परिवारैर्दिशो रुन्धन्नष्टापदं प्रति ॥ १३० ॥
अनुयाताऽपि वातेन, वेगादचलचीवरः । आजगाम गिरेर्मौलिमाकृष्टो मनसेव सः ॥ १३१ ॥
अप्राप्तपूर्वाजन्म, चरणौ प्राप्य चक्रिणः । मार्गभूर्दुर्भगेव स्त्री, रक्ताऽभूत् क्षरताऽसृजा ॥ १३२ ॥
अशक्तेऽपि सहाऽऽगन्तुं, छत्रधारिणि चक्रिणः । अपनिन्ये मनस्तापस्तपनातपवेदनाम् ॥ १३३ ॥
अथाष्टापदमारूढस्तं तथाऽवस्थितं प्रभुम् । अपश्यत् प्रसभोन्मीलद्बाष्पाविलविलोचनः ॥ १३४ ॥
स प्रणम्याभवद् यावदुपास्तिन्यस्तमानसः । अपश्यत् तावदायातान्, सर्वान् गीर्वाणनायकान् ॥ १३५ ॥
भक्ति-शोकभरामोगभङ्गुरीकृतकन्धरः । तैः समं शमिनामीशमुपासामासिवानसौ ॥ १३६ ॥

---

१ 'निर्धूत' प्रता० पाता० ॥ २ अथ प्रथममुत्पेदे, पुण्डरीकस्य केवलम् । मासान्ते चैत्रराकायां, ततोऽन्येषां तपोभृताम् ॥ ११७ ॥ इति श्लोकार्थं श्लोकः पाता० उपलभ्यते ॥

माघकृष्णत्रयोदश्यां, पूर्वाह्णेऽभीचिगे विधौ । समाहितमनाः काययोगे स्थित्वाऽथ बादरे ॥ १३७ ॥
अरौत्सीद् बादरौ शब्द-चित्तयोगौ जगद्गुरुः । कायस्य बादरं योगं, सूक्ष्मेणैव रुरोध सः ॥ १३८ ॥
क्षिप्तसूक्ष्मतनूयोगं, सूक्ष्मक्रियमिति क्रमात् । तार्तीयीकं स तीर्थेशः, शुक्लध्यानमसाधयत् ॥ १३९ ॥
ततश्चतुर्थमुच्छिन्नक्रियं ध्यानमशिश्रियत् । पञ्चह्रस्वाक्षरोच्चारकालमालम्बनातिगम् ॥ १४० ॥
प्रक्षीणाशेषकर्मौघः, संत्यक्ततनुपञ्चकः । स्वभावसिद्धोर्द्ध्वगतिर्ज्वालावदृजुनाऽध्वना ॥ १४१ ॥
अस्पृष्टाकाशगमनः, सिद्धानन्तचतुष्टयः । एकेन समयेनाऽऽप, मुक्तिलक्ष्मीवतंसताम् ॥ १४२ ॥
॥ युग्मम् ॥
क्षपकश्रेणिमारुह्य, परेऽपि परमर्षयः । तदा दश सहस्राणि, मुक्तिं प्रभुवदभ्ययुः ॥ १४३ ॥

प्रथममयमुदारां प्राप्य सम्यक्त्वलक्ष्मीं,
तदनु मनुजवर्ग-स्वर्गसाम्राज्यलक्ष्मीम् ।
अथ निरुपमसम्यग्ज्ञान-चारित्रलक्ष्मीं,
भुवनपतिरवाप श्रायसीं शर्मलक्ष्मीम् ॥ १४४ ॥

**॥ इति श्रीविजयसेनसूरिशिष्यश्रीमदुदयप्रभसूरिविरचिते श्रीधर्माभ्युदयनाम्नि श्रीसङ्घपतिचरिते लक्ष्म्यङ्के महाकाव्ये श्रीशत्रुञ्जयमहातीर्थोत्पत्ति-श्रीऋषभस्वामिनिर्वाणवर्णनो नाम पञ्चमः सर्गः ॥**

श्रीवस्तुपालसचिवस्य परे कवीन्द्राः,
कामं यशांसि कवयन्तु वयं तु नैव ।
येनेन्द्रमण्डपकृतोऽस्य यशःप्रशस्ति-
रस्त्येव शक्रहृदि शैलशिलाविशाले ॥ १ ॥

॥ ग्रन्थाग्रम् १४९ । उभयम् १४९८ ॥

---

१ °म् १५० । उभयम् १४८९ इति पाता० ॥

## षष्ठः सर्गः।

ऋषभजिननिर्वाणमहोत्सवः

प्रभोर्मोक्षक्षणे तत्र, नारकेष्वपि सौख्यदे। अज्ञातरुदितश्चक्री, मूर्च्छितः क्ष्मातलेऽपतत् ॥ १ ॥
शोकग्रन्थिविभेदाय, रुदितं शिक्षयन् हरिः। तस्य कण्ठमथाऽऽलम्ब्य, पूत्कारं तारमातनोत् ॥ २ ॥
लब्धसंज्ञोऽथ राजाऽपि, रुदन्नुच्चैःस्वरं पुरः। विह्वलः शोकपूरेण, विललापेति बालवत् ॥ ३ ॥
नाथ! त्यक्तः कुतो दोषादनाथोऽयं त्वया जनः?।
युष्मद् विना कथं भावी, भवारण्येऽशरण्यकः? ॥ ४ ॥
वियोगः सह्यते भानोः, पुनरुद्गमनाशया। अनावृत्तिपदस्थस्य, भवतस्तु सुदुःसहः ॥ ५ ॥
मुक्तोऽसि न यैर्दृष्टस्तेऽप्यस्मत्तः प्रभो! वरम्। अदृष्टेऽर्थे न तद् दुःखं, दृष्टनष्टे तु यद् भवेत् ॥ ६ ॥
बन्धवोऽप्यनुगन्तारस्त्वाममी मम सर्वथा। एक एवाहमत्रास्मि, त्वया पङ्क्तिबहिष्कृतः ॥ ७ ॥
भूत्वा तस्य सुतः श्रीमन्निति शोकवशंवदः। अपि मुक्तिपदप्राप्तं, किं व्रीडयसि त्वं प्रभुम्? ॥ ८ ॥
नृपः प्रलापान् कुर्वाणो, गीर्वाणपतिना स्वयम्। इत्थं प्रबोधितः शोकशङ्कुं किञ्चिन्मुमोच सः ॥ ९ ॥
॥ युग्मम् ॥
अथाऽऽदिष्टाः सुरेन्द्रेण, चन्दनैर्नन्दनोद्धृतैः। पूर्वस्यां दिशि याम्यायां, प्रतीच्यामपि च क्रमात् ॥ १० ॥
वृत्तां प्रभोः कृते त्र्यस्रामिक्ष्वाकुकुलजन्मनाम्। चतुरस्रां परेषां तु, चितां चक्रुर्दिवौकसः ॥ ११ ॥
॥ युग्मम् ॥
ततो मुक्तशरीराणि, निवेश्य शिबिकान्तरा। चितासमीपमानिन्युस्ते महेन महीयसा ॥ १२ ॥
अथो यथोचितं तेषु, निहितेषु चितान्तरे। वह्निं विचक्रुर्वायुं च, वह्नि-वायुकुमारकाः ॥ १३ ॥
तं च व्यध्यापयन् वह्निमह्नायाऽब्दकुमारकाः। सुगन्धिभिरुपानीतैः, क्षीरवारिधिवारिभिः ॥ १४ ॥
ततः सर्वेऽपि देवेन्द्राः, देवाश्च जगृहुर्मुदा। दंष्ट्रा-दन्तादिकान्यस्थिशकलानि यथोचितम् ॥ १५ ॥
याचमानाश्च देवेभ्यो, लब्धकुण्डत्रयाग्नयः। श्रावकास्ततःप्रभृत्येवमभूवन्नग्निहोत्रिणः ॥ १६ ॥
भस्मभूषणतां प्रापुः, परे तद्भस्मवन्दकाः। ततश्चितात्रयस्थाने, रत्नस्तूपान् व्यधुः सुराः ॥ १७ ॥
इन्द्राश्चाष्टाह्निकां नन्दीश्वरे कृत्वाऽञ्जनाद्रिषु। न्यस्य माणवकस्तम्भे, दंष्ट्रा भर्तुरपूपुजन् ॥ १८ ॥
भरतोऽपि प्रभोरङ्गसंस्कारासन्नभूतले। त्रिगव्यूतोच्छ्रयं चैत्यं, चक्रे योजनविस्तृतम् ॥ १९ ॥
रत्नाश्मनिर्मितेनाथ, तेन चैत्येन भासुरः। आविर्भूतो बभौ रत्नगर्भागर्भ इवाचलः ॥ २० ॥
तत्र चैत्ये चतुर्द्वारे, प्रतिद्वारं स मण्डपान्। विचित्रान् सूत्रयामास, प्रभापल्लविताम्बरान् ॥ २१ ॥
प्रत्येकं तत्पुरः प्रेक्षामण्डपानां चतुष्टयम्। अक्षपाटक-चैत्यद्रु-पीठ-पुष्करिणीयुतम् ॥ २२ ॥
तं गिरिं दण्डरत्नेन, समीकृत्य नृपो व्यधात्। अष्टापदं स सोपानैरष्टभिर्मेखलानिभैः ॥ २३ ॥

१ तलेऽलुठत् संता॰ पाता॰ ॥ २ जन्मिनाम् पातासं॰ ॥

लोहयन्त्रमयानेप्यज्ञनताशातनाभयात् । रक्षकानार्पमिस्तत्राकार्षीत् कीनाशदासवत् ॥ २४ ॥
तस्य सिंहनिषद्याख्यप्रासादस्य च मध्यतः । देवच्छन्दं व्यधाचक्री, रत्नपीठप्रतिष्ठितम् ॥ २५ ॥
यथामानं यथावर्णं, यथालाञ्छनमत्र च । बिम्बानि ऋषभादीनां, चतुर्विंशतिमातनोत् ॥ २६ ॥
कृत्वा रत्नमयीः सर्वभ्रातृणां प्रतिमा अपि । तत्रोपास्तिपरां भूपः, स्वमूर्तिमपि निर्ममे ॥ २७ ॥
बहिश्चैत्यं चितास्थाने, प्रभोः स्तूपमपि व्यधात् । भ्रातृणामपि च स्तूपान्, नवतिं स नवाधिकाम् ॥ २८ ॥
प्रतिष्ठाप्याथ बिम्बानि, तत्र चैत्ये यथाविधि । पयोभिः स्नपयामास, मांसलामोदमेदुरैः ॥ २९ ॥
प्रमृज्य गन्धकाषाय्या, चन्दनेन विलिप्य च । अर्चयामास माणिक्य-सुवर्ण-कुसुमांशुकैः ॥ ३० ॥
तत्र चागुरु-कर्पूर-धूपधूम्या घनावृते । कुर्वन् घण्टारवैर्गर्जिं, विद्युतं भूषणद्युता ॥ ३१ ॥
तूर्य-चामर-सोत्कर्षपुष्पवर्षमनोहरम् । कर्पूरारात्रिकं चक्री, चक्रे शक्रेण सन्निभः ॥ ३२ ॥ युग्मम् ॥
तदन्ते च विधायोच्चैर्विधिवच्चैत्यवन्दनाम् । महीमहेन्द्रस्तुष्टाव, भावपावनमानसः ॥ ३३ ॥
अहो! सहोत्थितज्ञानत्रयो विश्वत्रयीपतिः । दुःखत्रयात् परित्राता, त्रिकालज्ञो जयत्ययम् ॥ ३४ ॥
जयत्येष स्व-परयोर्निर्विशेषमना मुनिः । समीपदीपस्त्रैलोक्येऽप्युच्चैस्तमतमश्छिदे ॥ ३५ ॥
अयं जयति कन्दर्पसर्पदर्पपतत्पतिः । सुरा-ऽसुरशिरोरत्नराजिनीराजितक्रमः ॥ ३६ ॥
जयत्यसावसामान्यधामधामजिनाग्रणीः । समग्रजगदम्भोजविकाशनविभाविभुः ॥ ३७ ॥
असौ दिशतु विश्वेऽपि, हर्षमुत्कर्षयन् गुणान् । स्पष्टमष्टमहाकर्ममर्मनिर्मन्थकर्मठः ॥ ३८ ॥
सम्पिष्टविष्टपानिष्टदुरितोऽङ्कुरितोत्सवः । जयत्ययं महामायात्रियामाया दिवाकरः ॥ ३९ ॥
असावपारसंसारसमुत्तारतरण्डकः । जयतादुज्ज्वलज्ञानमुक्ताधानकरण्डकः ॥ ४० ॥
सिद्धिसौधोन्मुखप्राणिश्रेणिनिःश्रेणिसन्निभः । रोहन्मोहद्रुमद्रोहलोहपर्शुर्जयत्ययम् ॥ ४१ ॥
आदिनाथमिति स्तुत्वा, परानपि जिनेश्वरान् । पुनः पुनर्नमंश्चैत्यान्, कथञ्चिन्निर्ययौ नृपः ॥ ४२ ॥
गिरिं विलोकयन् वारंवारं वलितकन्धरः । मोक्तुं मोक्तुं चासमर्थो, निधानमिव तद्धनः ॥ ४३ ॥
वस्त्रान्तमार्जितोन्मज्जद्बाष्पप्लुतविलोचनः । निभृतैर्मौनिभिर्भूपैर्वृतोऽप्येक इव व्रजन् ॥ ४४ ॥
मन्दमन्दाङ्घ्रिसञ्चारमुत्ततार गिरेस्ततः । नृपः शोकतमःपूरैरपश्यन्निव वर्त्मनीम् ॥ ४५ ॥
॥ विशेषकम् ॥
असौ सैन्यजनै[१] स्वस्ववाहनत्वरणालसैः । शोकप्रच्छादितोत्साहप्रयोध्यामविशत् पुरीम् ॥ ४६ ॥
नाभेयमनुपादानां, दिवानिशमसौ स्मरन् । स्यक्तान्यव्यापृतिस्तत्र, तस्थावस्वस्थमानसः ॥ ४७ ॥
तममात्यजनो धीस्य, सर्वकृत्यपराङ्मुखम् । इति प्रबोधयामास, पितृ-भ्रातृशुचाकुलम् ॥ ४८ ॥
जगतोऽपि कृतालोकं, लोकोत्तरपदास्पदम् । तातं ह्रतविपेचापं, शोचितुं तव नोचितम् ॥ ४९ ॥
तद्वचःकुसुमासारसारसौरभसम्भृतः । शोच्यस्त्वया न चात्माऽपि, पुण्यलक्ष्मीस्वयंवरः ॥ ५० ॥
मूर्खो दुःखार्दितोऽभ्येति, लोकः शोकस्य वश्यताम् । सेवते न पुनर्धर्म्मं, तत्प्रतीकारकारणम् ॥ ५१ ॥
त्वमप्याक्रान्तलोकेन, शोकेन यदि जीयसे । शौडीर्यगर्जितं तद्वे, न धत्ते ध्रुवमूर्जितम् ॥ ५२ ॥
नमोऽप्यभीडयत् पीडाविस्मारणविधित्सया । एवं प्रतिदिनं नानाविनोदैराचसम्मदम् ॥ ५३ ॥

---

१ °नभय घ संगा० ॥ २ दुष्प्रापनिष्पमिस्तुतः पना० संगा० ॥ ३ °भायसुः पना० ॥ ४ लोकान्तर° पना० संगा० ॥ ५ °पश्चातं, शो° संगा० पता० ॥

जलैर्जितामृतैः स्वामिदेशनावन्धबन्धुभिः । सह मित्रसमूहेन, चक्रे केलिं कदाऽपि सः ॥ ५४ ॥
आदायाऽऽदाय पद्मानि, तत्र मूर्धनि धारयन् । नृपः प्रमोदमाप्नोति, नाभेयाङ्घ्रिभ्रमादिव ॥ ५५ ॥
कदाऽप्युपवनोत्सङ्गे, धत्ते मुदमसौ लसन् । पुष्पाणि वासिताशानि, पश्यन् नाभेयकीर्तिवत् ॥ ५६ ॥
वहन् स कौसुमीं मालां, हृदि तत्र प्रमोदते । प्रभोर्व्याख्याक्षणोन्मीलद्दशनद्युतिकौतुकात् ॥ ५७ ॥
भूनेता नित्यमित्यादिकेलिकल्लोलकौतुकी । मुदा निर्गमयामास, दिनानि घटिकार्द्धवत् ॥ ५८ ॥
सांसारिकसुखाम्भोधिमग्नो भरतभूपतिः । विभोर्मोक्षदिनात् पञ्च, पूर्वलक्षाण्यवाहयत् ॥ ५९ ॥

भरतचक्रवर्त्तिकेवलज्ञान-निर्वाणे

अन्येद्युः स्नात्रनिर्णिक्तगात्रो धात्रीभृतांवरः । अन्तरन्तःपुरावासं, भूरिभूषणभूषितः ॥ ६० ॥
रत्नादर्शगृहं प्राप, वैरस्त्रीपरिवारितः । भरतेशो नभोदेशं, विभाभिरिव भास्करः ॥ ६१ ॥ युग्मम् ॥
शुशुभे स स्थितस्तत्र, दर्पणप्रतिबिम्बितः । विजितेन स्मरेणेव, सेवितुं कृतसन्निधिः ॥ ६२ ॥
तदा विलोकमानस्य, नृपस्य मणिदर्पणम् । अभवद् द्विगुणा मूर्त्तिः, कान्तिः कोटिगुणा पुनः ॥ ६३ ॥
न्यस्तं मोहेन हिञ्जीरमिव तस्य महीक्षितुः । तदा लीलालुलत्पाणेर्निजगालाङ्गुलीयकम् ॥ ६४ ॥
विना तेनाङ्गुलीयेन, दृष्टा तेनाङ्गुली ततः । निःश्रीका निष्पताकेव, मणिकेतनयष्टिका ॥ ६५ ॥
सौभाग्यं भूषणैरेव, बिभर्त्ति वपुरङ्गिनाम् । निश्चेतुमिति मोक्तुं स, प्रारेभे भूषणावलीम् ॥ ६६ ॥
विमुच्य मुकुटं हेममयं मौलिं व्यलोकयत् । श्रिया विरहितं चैत्यमिव निष्कलशं नृपः ॥ ६७ ॥
मुक्ते मुक्तावलीनद्धे, कुण्डलद्वितयेऽथ सः । शशाङ्कमिव निश्चक्रं, स्वास्यं निःश्रीकमैक्षत ॥ ६८ ॥
व्यलोकयत् परित्यक्तहारां स हृदयावनीम् । संशुष्कनिर्झरोद्गारां, स्वर्णाचलतटीमिव ॥ ६९ ॥
ग्रीवामुत्तारितस्मेरमणिग्रैवेयकामसौ । अतारापरिधिं मेरुमेखलामिव चैक्षत ॥ ७० ॥
स भुजौ च्युतलक्ष्मीकौ, निरैक्षत निरङ्गदौ । प्रतिमानविनिर्मुक्तौ, सुरेभदशनाविव ॥ ७१ ॥
हस्तावपास्तमाणिक्यकङ्कणौ पश्यति स्म सः । तोरणस्तम्भवद् वातहृतवन्दनमालिकौ ॥ ७२ ॥
शेषा अप्यङ्गुलीर्मुक्ताङ्गुलीयाः सस्ततेजसः । शाखा इव परिभ्रष्टपल्लवाः स व्यलोकयत् ॥ ७३ ॥
एवं विमुक्तालङ्कारं, सोऽपश्यद् वपुरप्रभम् । शुष्कं सर इव भ्रष्टहंस-राजीव-कैरवम् ॥ ७४ ॥
अचिन्तयच्च ही ! देहो, भूषणैरेव भासते । पङ्कोत्कर्षाकुलो वर्षाकालः सस्योद्गमैरिव ॥ ७५ ॥
शरीरं मलमञ्जूषा, बहिर्दुर्गन्धिभीरुभिः । मूढैः कर्पूर-कस्तूरी-चन्दनैरधिवास्यते ॥ ७६ ॥
मलोत्पन्नान्मलैः पूर्णादतोऽङ्गाल्लीनमन्तरा । धौतं योषिज्जलैः ज्ञानरत्नमाद्रियते बुधैः ॥ ७७ ॥
स्वकीयान् बान्धवानेव, मन्ये धन्यतमानिमान् । यैरिदं राज्यमुत्सृज्य, लेभे लोकोत्तरं पदम् ॥ ७८ ॥
अहं तु विषयातङ्कपङ्कनिःशूकशूकरः । गणयामि न नामाहमात्मानं मानुषेष्वपि ॥ ७९ ॥
चिन्तयन्नित्ययं धीमानपूर्वकरणक्रमात् । भावनां भवनाशाय, भावयामास भूविभुः ॥ ८० ॥
अयोचैः सिद्धिसौधाग्रसङ्गजाग्रन्मनोरथः । क्षितीशः क्षपकश्रेणीनिःश्रेणीमारुरोह सः ॥ ८१ ॥
मुनिस्तदानीमानीतकेवलश्रीकरग्रहः । उत्सवोत्सुकचित्तेन, सुरेन्द्रेणाभ्यगम्यत ॥ ८२ ॥

१ °स, यासरान् घटि° संता० ॥ २ °क्षाननि° संता० ॥ ३ प्रियाभिरभितो वृतः संता० ॥
४ °धनिम् संता० ॥

ख्यापयित्वा बलीयस्त्वं, व्यवहारनयस्य सः । शक्रेणाभिदधे दीक्षावेषग्रहणहेतवे ॥ ८३ ॥
केशसम्भारमुत्पाट्य, मुष्टिभिः पञ्चभिर्नृपः । दत्तं देवतयाऽशेषं, मुनिवेषं तदाऽऽददे ॥ ८४ ॥
सममेव महीशानां, सहस्रैर्दशभिस्तदा । साग्रहैर्जगृहे दीक्षादक्षैः स्वाम्यनुवर्तने ॥ ८५ ॥
तदानीं केवलज्ञानमहिमानं महामनाः । व्यधत्त तस्य नाभेयप्रभोरिव ऋभुप्रभुः ॥ ८६ ॥
भरतोऽपि ततस्तातवर्तनीमनुवर्तयन्[1] । असिञ्चद् देशनासारसुधाभिरवनीवनीम् ॥ ८७ ॥
अतिक्रम्य ततः पूर्वलक्षं दीक्षादिनादसौ । आरोहन्मुषिताशेषकष्टमष्टापदाचलम् ॥ ८८ ॥

कृत्वा मासोपवासक्षपणमकृपणध्यानशुद्धान्तरात्मा,
शैलेशीं प्राप्य योगव्यतिकरहरणोपात्तसौस्थ्यामवस्थाम् ।
तत्रायं त्रातपाताकुलसकलजगज्जन्तुजातः प्रयातः,
सिद्धिं सौधर्मनाथप्रथितपृथुमहःश्लाघ्यनिर्वाणलक्ष्मीः ॥ ८९ ॥

॥ इति श्रीविजयसेनसूरिशिष्यश्रीमदुदयप्रभसूरिविरचिते श्रीधर्माभ्युदयनाम्नि श्रीसङ्घपतिचरिते लक्ष्म्यङ्के महाकाव्ये भरतनिर्वाणवर्णनो नाम षष्ठः सर्गः ॥

एतेऽन्योन्यविरोधिनस्त्वयि गुणाः श्रीवस्तुपाल ! क्षमा-
शक्ति-प्रातिभ-वैभवप्रभृतयः सौहृद्येन तस्थुः कथम् ? ।
नाश्चर्यं यदि वा दिवानिशमसौ हृत्पङ्कजान्तस्तव,
स्वैरस्मेरविरोधवारिधिमदागस्त्यो यदास्ते जिनः ॥ १ ॥

॥ ग्रन्थाग्रम् ९२ ॥ उभयम् १५९०[2] ॥

---

१ °स्तातवर्त्तनीमनुवर्त्तनीम् । असि° संता० ॥ २ °म् ९० । उभयं १५९० संता० । °म् ९१ । उभयं १५८१ पाता० ॥

## सप्तमः सर्गः ।

इत्थं परोपकारस्य, विपुलाः फलसम्पदः । धनसार्थेशदृष्टान्तात्, तवामात्य! प्रदर्शिताः ॥ १ ॥
यदुत्तरोत्तरश्रीणां, सञ्जज्ञे भाजनं धनः । सर्वं परोपकारस्य, तदेतन्महिमाऽद्भुतम् ॥ २ ॥
किञ्च विश्वोपकाराय, तद् युगादिजिनेन्दुना । तीर्थेषु धुर्यतां नीतः, सोऽपि शत्रुञ्जयो गिरिः ॥ ३ ॥
मन्त्रिन्नेतस्य तीर्थस्य, प्रभावविभवोऽद्भुतः । यं वक्तुं सङ्कुचन्त्युच्चैर्वाचो वाचस्पतेरपि ॥ ४ ॥
मनोरथेऽपि सम्पन्ने, यत्र यात्रोत्सवं प्रति । सम्यक्त्वरत्नं निर्यत्नं, सद्योऽप्यासाद्यते जनैः ॥ ५ ॥
दृष्टेऽपि यत्र पुण्यश्रीः, स्यादवश्यं वशंवदाः । स्पृष्टे तु साऽपि निर्वाणपदवी न दवीयसी ॥ ६ ॥

### कपर्दियक्षोत्पत्तिः

उपत्यकायां किञ्चास्य, पञ्चास्यध्वनितादपि । जयत्यभीरुकाभीरं, पुरं पालित्तपालितम् ॥ ७ ॥
तत्राभवत् कपर्दीति, नाम ग्राममहत्तरः । चौर्य-क्रौर्य-मृषा-मद्य-द्यूतस्यूतमनोरथः ॥ ८ ॥
पूरिताऽप्यघसङ्घातैरनघा नाम विश्रुता । उद्दण्डा चण्डतेवाऽभूद्, देहिनी तस्य गेहिनी ॥ ९ ॥
अन्येद्युर्मद्यपानेन, ताम्रास्यो मद्यभाण्डभृत् । अपश्यन्मञ्चकासीनो, मुनिद्वन्द्वमुपागतम् ॥ १० ॥
नत्वा भ्रूभङ्गमात्रेण, तौ मुनी निजगाद सः । हंहो ! निवेद्यतामत्र, समागमनकारणम् ॥ ११ ॥
तक्रेण दध्ना दुग्धेन, सर्पिषा वा प्रयोजनम् ? । यद्यस्ति किञ्चित् तद् ब्रूत, नूतनं दर्शनं हि वः ॥ १२ ॥
तमूचतुर्मुनी हंहो !, महत्तर ! निशम्यताम् । त्वदन्तिकमुपागन्तुमस्ति नौ कारणान्तरम् ॥ १३ ॥
तीर्थयात्रार्थमायाताः, सन्त्यत्र गुरवोऽधुना । सोऽयं तोयदकालोऽपि, समं दैवादवातरत् ॥ १४ ॥
गुरूणां युज्यते स्थातुं, चतुर्मासीमिहैव यत् । उपाश्रयार्थमायातौ, ततश्चावां तवान्तिके ॥ १५ ॥
सोऽप्यब्रवीन्निराबाधो, गृह्यतामयमाश्रमः । निजोपदेशलेशोऽपि, देयो नात्र स्थितैः पुनः ॥ १६ ॥
तथेति प्रतिपद्याथ, तस्थुस्ते तत्र सूरयः । स्पर्द्धिष्णवः पयोवाहं, स्वाध्यायामृतवृष्टिभिः ॥ १७ ॥
प्रतिश्रयान्तः संलीनैरदीनैर्मुनिपुङ्गवैः । अत्यवाह्यत बाह्या-ऽन्तःसंयतैः स तपात्ययः ॥ १८ ॥
मानसादिव तद्धामान्मुनिहंसा विहारिणः । ऊचुः कपर्दिनं प्राणिमर्दिनं तेऽनुयायिनम् ॥ १९ ॥
अस्माकं स्थानदानेन, सर्वथोपकृतं त्वया । तवोपकारिणोऽप्युच्चैरस्माभिस्तु न किञ्चन ॥ २० ॥
तदद्य यद्यनुज्ञा ते, ज्ञातेयमनुरुध्यते । दत्त्वोपदेशं तत् किञ्चिन्निर्धुनीमोऽधमर्णताम् ॥ २१ ॥
महत्तरोऽवदद् देयः, स्तोकोऽपि नियमो न मे । कथयन्तु पुनः किञ्चिदक्षरं परमाक्षरम् ॥ २२ ॥
ततस्ते गुरवस्तस्मै, स्मितनेत्राम्बुजन्मने । परमेष्ठिमयं मन्त्रं, मानसान्तर्न्यवीविशन् ॥ २३ ॥
एनमन्वशिषंश्चैते, त्वया मन्त्रोऽयमद्भुतः । शयने भोजने पाने, स्मर्तव्यः प्रथमं सदा ॥ २४ ॥
महीयान् महिमा भद्र !, कतमोऽस्य प्रशस्यते ? । स्वरूपः कल्पद्रुमो यत्र, चिन्ता चिन्तामणौ वृथा ॥ २५ ॥
पञ्चाननवधूः पञ्चपरमेष्ठिनमस्कृतिः । स्थित्वा मनोवनोद्देशे, हन्ति दन्तिसमं तमः ॥ २६ ॥

---

१ 'म्रास्यो मद्य' संता० ॥ २ 'य तद्' संता० ॥ ३ 'थयः । नि' पाता० ॥

दुरितानि दुरन्तानि, तस्य नश्यन्ति दूरतः । यच्चित्ते यामिकी पञ्चपरमेष्ठिनमस्कृतिः ॥ २७ ॥
अत्र शत्रुञ्जयाद्रौ च, श्रीयुगादिजिनेश्वरः । नमस्कार्योऽन्वहं सन्ध्यामवन्ध्यां तन्वता त्वया ॥ २८ ॥
अयं हि विमलो नाम, गिरिर्धुरि[1] धरामृताम् । स्थानमासूत्रयद् यत्र, जगत्त्रयगुरुः स्वयम् ॥ २९ ॥
ख्यातिर्विमल इत्यस्य, विश्वान्तरमलव्ययात् । जयादान्तरशत्रूणां, श्रीशत्रुञ्जय इत्यपि ॥ ३० ॥
भावेन भजतामेतं, मुक्तिः साऽपि स्वयंवरा । लक्ष्मीरिव भवेन्न्यायवर्तनीवर्तिनां नृणाम् ॥ ३१ ॥
यदस्मिन् पुण्डरीकेण, धुर्येण गणधारिणाम् । लेभे मुक्तिर्मुनीन्द्राणां, पञ्चभिः कोटिभिः सह ॥ ३२ ॥
द्रविडा वालिखिल्याश्च, नरेशा दश कोटयः । सहैव सिद्धिसौधाग्रमारोहन् मोहनिर्जयात् ॥ ३३ ॥
ख्यातनामा नमिः कोटिद्वयेन विनमिश्च सः । वालिर्दाशरथी राम-भरतौ च शमे रतौ ॥ ३४ ॥
थावच्चानन्दनः सोऽपि, ध्वस्तशोकः शुकोऽपि च । मुनीनां द्विसहस्रेण, पञ्चशत्या तु शैलकः[2] ॥ ३५ ॥
पाण्डवाः किञ्च पञ्चापि, जनन्या सह धन्यया । प्रद्युम्नादिकुमाराणां, सार्द्धास्तिस्रश्च कोटयः ॥ ३६ ॥
॥ पञ्चभिः[3] कुलकम् ॥

नारदः पारदस्वच्छसच्चरित्रपवित्रधीः । अस्मिन्नवासवान् मुक्तिमतिमुक्तमुनेर्गिरा ॥ ३७ ॥
तीर्थाधिपतिभिः सर्वैरेकं श्रीनेमिनं विना । अत्र पावित्र्यमासूत्रि, पावनैः पादपांशुभिः ॥ ३८ ॥
तिर्यञ्चोऽपि हि धन्यास्ते, येऽत्र संजज्ञिरे गिरौ । मन्ये धन्यतमं त्वां तु, नित्योपासनवासनम् ॥ ३९ ॥
शिक्षाभङ्गीमिमामङ्गीकार्य तं सूरयो ययुः । शिक्षाऽपि क्रियया भेजे, कपर्दिनमहर्दिनम् ॥ ४० ॥
निरस्तः सोऽन्यदा क्रोधचण्डया रण्डया तया । बहिर्गृहाद् विनिर्यातः, शत्रुञ्जयतले ययौ ॥ ४१ ॥
श्रमाद् विश्रामकामोऽथ, वटं विटपिनं श्रितः । आसन्नभूतले सद्यो, मद्यभाण्डं मुमोच सः ॥ ४२ ॥
क्षणमात्रेण विश्रान्तः, स्मृतपञ्चनमस्कृतिः । पातुकामः सुरां पात्रे, विषबिन्दुं ददर्श सः ॥ ४३ ॥
कुतोऽयमिति तेनाथ, दूरोदञ्चितचक्षुषा । दृष्टो गृध्रः फणिग्रासव्यग्रो न्यग्रोधपादपे ॥ ४४ ॥
मदिराक्षीमिव त्यक्त्वा, मदिरामप्ययं ततः । आरुरोह गलन्मोहः, शत्रुञ्जयगिरेः शिरः ॥ ४५ ॥
तत्र नेत्रसुधावृष्टौ, दृष्टे भुवनभर्तरि । पराभवभवस्तस्य, तापः प्रापत् तदा शमम् ॥ ४६ ॥
ततः कन्दलितानन्दः, प्रणम्य परमेश्वरम् । स पश्यन्नात्मनो ग्राममुच्चरं शिखरं ययौ ॥ ४७ ॥
तत्र पश्यन् प्रभोश्चैत्यं, स्मरन् पञ्चनमस्कृतिम् । मुक्त्वा प्रचारमाहारपरिहारं चकार सः ॥ ४८ ॥
ततस्तीर्थप्रभावेन, भावेन च शुभेन सः । यक्षतामक्षतां प्राप, सप्रभावां भवान्तरे ॥ ४९ ॥
ततः सोऽवधिना बुद्ध्वा, कपर्दी वृत्तमात्मनः । परित्यज्यान्यकार्याणि, वेगादिह समागमत् ॥ ५० ॥
क्षपयित्वाऽर्चयित्वा च, स्तुत्वा च भुवनप्रभुम् । ततो विज्ञः कृतज्ञोऽसौ, जगाम गुरुसन्निधौ ॥ ५१ ॥
गुरून् सोऽथ नमस्कृत्य, दिव्यरूपधरः पुरः । ज्ञापयित्वा स्ववृत्तान्तमुवाच रचिताञ्जलिः ॥ ५२ ॥
ममैतास्तात ! यक्षत्वसुलभाः सुखसम्पदः । तवोपदेशकल्पद्रोरुत्फुल्लपल्लवश्रियः ॥ ५३ ॥
प्रभवोऽन्येऽपि दृष्टेभ्यः, कष्टेभ्यस्त्रातुमातुरम् । दृष्टादृष्टं पुनः कष्टं, पेष्टुमीष्टे परं गुरुः ॥ ५४ ॥
वस्तुनोऽन्यस्य दत्तस्य, फलं क्षयि मुहुर्मुहुः । गुरूपदेशस्य पुनः, फलं गुरु पुरः पुरः ॥ ५५ ॥
तदादेशं प्रयच्छन्तु, गुरवः करवाणि किम् ? । कथञ्चित् तनुतामेति, मम येनाघमर्णता[4] ॥ ५६ ॥

१ 'रि महीभृ' संता० पाता० ॥ २ शैलकः वता० ॥ ३ कलापकम् वता० पाता० ॥
४ म्यघमाणि संता० ॥

ऊचिरे सूरयोऽप्येतत्, कृतज्ञस्य तवोचितम् । तीर्थप्रभावप्रभवं, वैभवं भवतः पुनः ॥ ५७ ॥
तदत्रावस्थितेनैव, सेव्यः शश्वदसौ प्रभुः । तदाराधकलोकस्य, दुरितं हरता त्वया ॥ ५८ ॥
ततो गुरूणामादेशाद्, देशान्तरपराङ्मुखः । यक्षः कपर्दी तीर्थेऽस्मिन्, विघ्नमर्दी स्थितः स्वयम् ॥ ५९ ॥
वृत्तान्तमेनमाकर्ण्याऽनघा कौलीनशङ्किनी । शाकिनीवातिदुष्टाऽपि, स्वपापेनान्वतप्यत ॥ ६० ॥
सा विवेकमिवोत्तुङ्गमारुह्य शिखरं गिरेः । प्रभुमेनं नमस्कृत्य, कृत्यज्ञा भक्तमत्यजत् ॥ ६१ ॥
ततः सा तीर्थमाहात्म्याद्, द्विपरूपधरः सुरः । भर्तुर्वाहनतां प्रापदाभियोगिककर्मणा ॥ ६२ ॥
यक्षस्ततः प्रभृत्येष, कपर्दी करिवाहनः । पाशा-ऽङ्कुशलसद्वाम-दक्षिणोपरिपाणिकः ॥ ६३ ॥
द्रव्यप्रसेविका-बीजपूराङ्काधःकरद्वयः । स्थापितः शिखरेऽत्रैव, भजते जनपूजनम् ॥ ६४ ॥
समस्तेष्वपि सङ्घेषु, तीर्थयात्राविधायिषु । कुरुते दुरितोच्छेदमेदुरं प्रमदोदयम् ॥ ६५ ॥
दिवानिशमसौ तीर्थरक्षादक्षिणमानसः । विधत्ते प्रत्यनीकेषु, सम्प्रत्यपि विनिग्रहम् ॥ ६६ ॥

## शत्रुञ्जयतीर्थोद्धारवर्णनम्

अपि चात्र जिनाधीशचैत्यं भरतकारितम् । भूयोभिरुद्धृतं भूपैर्गतं कालेन जीर्णताम् ॥ ६७ ॥
ततश्चेक्ष्वाकुवंश्येन, स्मरता निजपूर्वजान् । पुनः सगरसंज्ञेन, तच्चक्रे चक्रिणा नवम् ॥ ६८ ॥
ततः क्रमेण रामेण, निर्जित्य दशकन्धरम् । धरोद्धरणधुर्येण, चैत्यमेतत् समुद्धृतम् ॥ ६९ ॥
इत्यभिजभुजौर्जित्यजितकौरवगौरवैः । पुनर्नयमयलक्ष्मीताण्डवैरथ पाण्डवैः ॥ ७० ॥
ततो मधुमतीजातजन्मना सत्त्वसद्मना । देवतादेशमासाद्य, तपो-ब्रह्ममयात्मना ॥ ७१ ॥
पुण्यप्राप्यं प्रतिष्ठाप्य, प्रभूतद्रविणव्ययात् । ज्योतीरसाश्मनो बिम्बं, जावडेन न्यवेश्यत ॥ ७२ ॥
॥ युग्मम् ॥
शिलादित्यक्षमापालो, वलभीवलभित् ततः । पुनर्नवीनतारुण्यपुण्यं चक्रे जिनालयम् ॥ ७३ ॥
गूर्जरत्राधरित्रीशे[2], ततः सिद्धाधिपे सति । श्रीमानाशुकमन्त्रीशस्तीर्थमेनमपूपुजत् ॥ ७४ ॥
उपत्यकायामेतस्य, निवेश्य च निवेशनम् । स चैत्यं नेमिनाथस्य, भक्तिसारमकारयत् ॥ ७५ ॥
वापीमप्यत्र लोकस्य, तृष्णाविच्छेददायिनीम् । भगवद्देशनासारनीरां [illegible] निरमापयत् ॥ ७६ ॥
किञ्च तीर्थेऽत्र पूजार्थं, द्वादशग्रामशासनम् । अदापयदयं मन्त्री, सिद्धराजमहीभुजा ॥ ७७ ॥
कुमारपालभूपाले, पालयत्यवनीतलम् । मन्त्री वाग्भटदेवोऽभूदयोदयननन्दनः ॥ ७८ ॥
निदेशादथ भूभर्तुरभ्यमित्रीणताजुषः[3] । समं सुराष्ट्रापतिना, पितुः सङ्ग्रामगामिनः ॥ ७९ ॥
समायातस्य तीर्थेऽस्मिन्, तीर्थोद्धारमनोरथम् ।
विज्ञो विज्ञातवान् सोऽयं, परिवारगिरा चिरात् ॥ ८० ॥ युग्मम् ॥
पुण्यलक्ष्मीं भवाम्भोधेरुद्धर्तुं पुरुषोत्तमः । स नाभेयप्रभोर्नव्यं, मन्दिरं मन्दरं व्यधात् ॥ ८१ ॥
विशालशालं शैलाधो, मुक्ताभकपिशीर्षकम् । ताडङ्कवद् भुवश्चक्रे, श्रीकुमारपुरं पुरम्[4] ॥ ८२ ॥
त्रिभुवनपालविहारे, नीलमणिविडम्बिपार्श्वजिनबिम्बः ।
इह वहति मध्य[5]निहितस्तवकतुलामतुलसौभाग्यः ॥ ८३ ॥

---

१ °दयं प्र° संता० ॥ २ °धराधीशे संता० ॥ ३ °जुषा संता० पाता० ॥ ४ पुरा संता० पाता० ॥ ५ °ध्यविनि° वता० ॥

नन्दनाभिनयनाय नाटिकाः, वाटिकाश्च धृतपुष्पसाटिकाः
कर्तुमस्य जिनभर्तुरर्चनं, तत्पुरः परिसरेऽकरोदसौ ॥ ८४ ॥

इत्थं यथाश्रुतमयं[1] कथितः कथञ्चित्, किञ्चित् प्रभावविभवस्तव वस्तुपाल ! ।
वाग्गोचरे चरति सैष पुनः समस्त-स्तीर्थस्य[2] पश्य महिमा नहि मादृशानाम् ॥ ८५ ॥

संसारसागरपतज्जनतान्तरीप-मारोहतां शिवपदं प्रथमावतारः ।
पापप्रपातधुतधर्मनिवासदुर्गं, शत्रुञ्जयो जयति पुञ्जितपुण्यलक्ष्मीः ॥ ८६ ॥

॥ इति श्रीविजयसेनसूरिशिष्यश्रीमदुदयप्रभसूरिविरचिते श्रीधर्माभ्युदयनाम्नि श्रीसङ्घपतिचरिते लक्ष्म्यङ्के महाकाव्ये श्रीशत्रुञ्जयमाहात्म्यो[3]त्कीर्तनो नाम सप्तमः सर्गः ॥

श्रीवासाम्बुजमाननं परिणतं पञ्चाङ्गुलिच्छद्मतो,
जग्मुर्दक्षिणपञ्चशाखमयतां पञ्चापि देवद्रुमाः ।
वाञ्छापूरणकारणं प्रणयिनां जिह्वैव चिन्तामणि-
र्जाता यस्य किमस्य शस्यमपरं श्रीवस्तुपालस्य तत् ? ॥ १ ॥

स्वस्ति श्रीपुण्डरीकक्षितिधरशिखराद् यक्षमुख्यः कपर्दी,
भूमौ श्रीवस्तुपालं कुशलयति मुदा क्षेमवानस्मि सौम्य ! ।
सान्निध्यं सङ्घलोकेऽद्भुतमिति भवता कुर्वता सर्वथाऽहं,
चक्रे सौख्यैकपात्रं त्रिजगति सततं जीव तत् कल्पकोटीः ॥ २ ॥

॥ ग्रन्थाग्रम् ९५ । उभयम् १६८५ ॥

---

१ यथाश्रुतिपथं कथि° पाता° सं० ॥ २ °स्ततीर्थ° पाता० ॥ ३ °त्म्यकी° पाता० ॥
४ °म् १६८६ सं० । °म् १६७६ पाता० ॥

# अष्टमः सर्गः ।

---

जितचिन्तामणिप्रायरत्नसम्भववैभवम् । जयत्यमेयमाहात्म्यं, ब्रह्मचर्यमयं महः ॥ १ ॥
तदेतद् दुरितध्वान्तबन्धविध्वंसनौषधम् । त्रैधं समिद्धमाधेयं, श्रीजम्बूस्वामिना यथा ॥ २ ॥

## जम्बूस्वामिपूर्वभवचरितम्

मगधोऽध्वगघोरण्याः, श्रान्तिहर्त्ता श्रियः पदम् । अस्ति त्रिविष्टपादेशो, देशो भूखण्डमण्डनम् ॥ ३ ॥
छायोच्छेदितसन्तापाः, स्फुरच्छत्राद्भुतश्रियः । भूपरूपा बभुर्यत्र, तरवः सरवद्विजाः ॥ ४ ॥
यस्मिन् हरन्ति पर्यन्तहरितः सरितः सदा । भूमेः श्यामांशुकस्यूतप्रान्तकान्तदुकूलताम् ॥ ५ ॥
ग्रीष्मेऽपि वारि यच्छन्तो, महिषैः स्थानपूरणैः । यस्मिन्नदुर्न दुर्भिक्षमम्भसां जातुचिद् घनाः ॥ ६ ॥
काष्ठासु दशसु ग्रामः, सुग्राम इति विश्रुतः । तदन्तर्विद्यते ह्यविद्यतेजस्विपूरुषः ॥ ७ ॥
यल्लक्ष्मीलेलया शेष-लेलपुर्यौ विनिर्जिते । स्थानं निम्नं च शून्यं च, जग्मतुर्लज्जिते ध्रुवम् ॥ ८ ॥
राष्ट्रकूटान्वयः श्रीमानार्यवानार्यवागभूत् । तत्राद्रिकूटतुल्यान्नकूटः कौटुम्बिकाग्रणीः ॥ ९ ॥
तस्याजनि गुणैर्वर्या, मर्यादाजलधेर्वधूः । जाह्नवीशुभ्रनीरेव, रेवती शीलशालिनी ॥ १० ॥
एतयोर्भवदत्तश्च, भवदेवश्च विश्रुतौ । अभूतां निहताशर्मधर्मकर्मयुतौ सुतौ ॥ ११ ॥
इभ्यः सुस्थितसूरिभ्यः, स्वैरं वैराग्यतोऽन्यदा । भवदत्तो निजगृहे, निःस्पृहो जगृहे व्रतम् ॥ १२ ॥
अनुसूरिपदद्वन्द्वमथासौ पृथिवीतले । बभ्राम ग्रामकाश्मानमश्मसारवदन्वहम् ॥ १३ ॥
एकदाऽऽत्मद्वितीयः सैत्सूरीनापृच्छ्य कश्चन । निजग्रामे जगामेच्छन्, बन्धुं व्रतयितुं व्रती ॥ १४ ॥
साधुः पाणिग्रहारम्भग्रहिलेन कनीयसा । न वीक्षितोऽप्यसौ हर्षप्रकर्षान्धेन बन्धुना ॥ १५ ॥
कनिष्ठमथ धिक्कुर्वन्, गुर्वन्तिकमगान्मुनिः । विलक्षो रविलक्षोरुतपस्तेजास्तनोतु किम् ? ॥ १६ ॥

गुरोः पुरो मुनौ तस्मिन्, तत् तथ्यं कथयत्यथ ।
भवदत्तोऽवदत् तोपिन्!, धिक्! तत्कठिनतामिति ॥ १७ ॥

तदोचे मुनिनाऽन्येन, भवदत्तो वदन्नदः । भ्राताऽस्य कठिनस्त्वं तन्मृदुं दीक्षय सोदरम् ॥ १८ ॥
सन्धासन्धानतोऽभावि, भवदत्तेन तन्मुदा । इदं बुध! विधातव्यं, गुरौ मगधगामिनि ॥ १९ ॥
विहरन् मिहिरश्रीको, देशाद् देशान्तरं क्रमात् । अगमन्मगधान् सूरिर्निर्मोभागानिवामलान् ॥ २० ॥
स्वग्रामं भवदत्तोऽथ, ययावेको गुरोर्गिरा । भयाय नासहायत्वं, सिंहस्येव महामुनेः ॥ २१ ॥
नागिलां वासुकीजानेर्नागदत्तस्य नन्दनीम् । कनीयान् भवदेवोऽग्रे, पाणौ जग्राह साग्रहः ॥ २२ ॥

---

१ °ण्डभूषणम् संता० पाता० ॥ २ °न् भजन्ति संता० पाता० ॥ ३ °ग्रस्तेज पाता० ॥
४ भाव° वता० ॥ ५ सन्, सू° संता० ॥

जनान्मत्वेति तत्त्वज्ञः, किङ्कर्तव्यतया जडः । मन्दमन्दममन्दश्रीर्निजं धाम जगाम सः ॥ २३ ॥
अब्जखण्डं त्रियामार्तं, मार्तण्ड इव दूरतः । स्वजनं स्मेरयन्नग्रे, शममूः समभूत् ततः ॥ २४ ॥
ते तु हेतुममुं पुण्यनैपुण्यस्य मुनिं जनाः । नमश्चक्रुर्निचक्रुश्च, दुरितं स्फुरितोद्यमाः ॥ २५ ॥
मुनिना धर्मलाभोऽथ, निर्मलाभो विनिर्ममे । तेषां तमस्ततिच्छेदी, दिशामिव निशाधवः ॥ २६ ॥
अस्ति मे गुरुरासन्नग्रामे सन्नतमाः शमी । मोक्तव्यं तत्र गत्वेति, स जगाद जनं मुनिः ॥ २७ ॥
तदाऽऽशु प्राशुकान्नेन, स यतिः प्रतिलम्भितः । उत्सुकस्तैः सदाचारसहकारशुकैः स्वकैः ॥ २८ ॥

नागिलायाः किलाऽऽयाम-रम्याक्ष्या वक्षसि स्वयम् ।
तन्वानो मण्डनं तन्व्याः, सम्पूर्णाखिलभूषणम् ॥ २९ ॥

बन्धुमागतमाकर्ण्य, वधूं मुक्त्वाऽर्धमण्डिताम् । द्विपो वल्लीरिव सखीरवधूयाग्रतो गताः ॥ ३० ॥
स्फूर्तिमन्तर्वहन् धर्मे, मूर्तिमन्तमिवाग्रजम् । भवदेवो जवादेव, जगाम च ननाम च ॥ ३१ ॥
॥ विशेषकम् ॥

सर्पिपः कल्पनीयस्य, पात्रं भ्रात्राऽर्पितं करे । प्रस्थानकं व्रजस्येव, भवदेवः सुधीर्दधौ ॥ ३२ ॥
प्रचचाल स चालस्यमुक्तो मुनिमतल्लिका । अस्तोकबन्धुलोकेन, परितः परिवारितः ॥ ३३ ॥
दूरतो वलितास्तस्य, नत्वा नत्वा च बान्धवाः । समीरे सम्मुखे सिन्धुप्रवाहस्येव वीचयः ॥ ३४ ॥
बाल्यक्रीडादिवार्ताभिरनार्ताभिः प्रवर्तकम् । घृताज्यभाजनः साधुमनुजस्त्वनुजग्मिवान् ॥ ३५ ॥
आनिनाय भवान् बन्धुं, मानिनायक! दीक्षितुम् ?। इत्यथ यतिभिः पृष्टः, प्राप साधुर्गुरोः पुरः ॥ ३६ ॥
प्रणम्य रम्यचारित्ररत्नरत्नाकरं गुरुम् । मुनिर्न्यवेदयद् बन्धुं, समायातं व्रताय तम् ॥ ३७ ॥
सत्यमित्यथ पृष्टोऽसौ, भवदेवोऽपि सूरिभिः । ज्यायान्नृपिर्मृषाभाषी, मा भूदित्यन्वमंस्त तत् ॥ ३८ ॥
ततः स्वबन्धुसम्बन्धबन्धनाबद्धचेतसः । नागिलागुणरक्तस्य, तस्य दीक्षां ददौ गुरुः ॥ ३९ ॥
भवदत्तप्रयुक्तेन, नियुक्तो गुरुणा स्वयम् । एकेन मुनिना साकं, ग्राममन्यं जगाम सः ॥ ४० ॥
अद्यापि भवदेवोऽयं, नायातीति समागताः । बन्धवो भवदत्तेन, साक्षाद् गत इतीरिताः ॥ ४१ ॥
बन्धूपरोधरुद्धात्मा, भवदेवो व्रते स्थितः । नित्यं ध्यायति चित्तेन, नागदत्तसुतां तु ताम् ॥ ४२ ॥
कालेन सुचिरेणाथ, शुचिरेणाङ्कवन्मुनिः । तपस्तपनपूर्वाद्रिर्भवदत्तो दिवं ययौ ॥ ४३ ॥
अकुर्वता व्रतादीनि, भ्रातरि स्वर्गयातरि । अलागि नागिलाध्याने, भवदेवेन तेन । ॥ ४४ ॥
अथ सुप्तां मुनिश्रेणीं, निशि मुक्त्वाऽब्जिनीमिव । स भृङ्ग इव गन्ताऽभूत्, कान्तां कैरविणीमिव ॥ ४५ ॥
अथ श्लथगुणग्रामः, सुग्रामग्रामसीमनि । गत्वाऽसौ मण्डपाहूतशैत्ये चैत्ये स्थितः क्वचित् ॥ ४६ ॥
आययौ वृद्धया साकमेकया सविवेकया । तदत्र काऽपि कामदुघाल्या कात्यायनी पुरः ॥ ४७ ॥

एतां श्वेताम्बरोऽपृच्छत्, रेवत्यार्यव्रतोः कथाम् ।
तौ प्रमीतौ ततः श्रुत्वा, सोऽपृच्छन्नागिलाकथाम् ॥ ४८ ॥

स्वयं सा नागिला चित्ते, भवदेवं विचार्य तम् । पप्रच्छ भवदेवोऽसि?, नागिलाजानिरित्यमुम् ॥ ४९ ॥
एष प्रियाविरोपोत्कस्तदाऽऽहं स्मरदाहवान् । भवत्या भवदेवोऽहं, भद्रे! कथमबोधिषि ? ॥ ५० ॥
सद्मनश्छद्मना नीत्वा, पुराऽहं ग्राहितो व्रतम् । भ्रात्रा मात्राधिकप्रीतिर्नागिलावशगोऽपि सन् ॥ ५१ ॥

---

१ बन्धवः पाता० ॥ २ पृष्टोऽसौ संता० ॥

तद्भ्रातरि गते स्वर्गमनर्गलतमस्य मे । मानसं नागिलाप्रीतिरधुनाऽतिधुनाति सा ॥ ५२ ॥
मन्मनःसहकारस्य, सा शुकी वासुकीसुता । अस्ति वा नास्ति वा साक्षादिदं वद मदग्रतः ॥ ५३ ॥
तदेवं भवदेवेऽस्मिन्, जल्पाके घस्मरस्मरे। वृद्धाया नागिलासख्याः, सूनुः प्राप्तः पुरो वटुः ॥ ५४ ॥
जगादायमिदं मातरहमस्मि निमन्त्रितः । दक्षिणार्थं गमिष्यामि, गेहमेहि त्वरातुरा ॥ ५५ ॥
दुग्धमुच्छालयिष्यामि, धर्तव्यं भाजनं त्वया। भुक्तं श्राद्धान्नमुद्गीर्य, यथाऽऽगत्य पिबामि तत् ॥ ५६ ॥
वदन्तमित्यवादीत् तं, भवदेवो हसन्निव । भविष्यसि कथं न त्वमितिलिप्सुर्जुगुप्सितः ? ॥ ५७ ॥
भवदेवमुवाचाथ, नागिला वेत्सि यद्यदः । प्रिया तवाहं मां वान्तां, तद् भोक्तुं यतसे कुतः ? ॥ ५८ ॥
मूढाशय! नवामूढामिव मामागतः स्मरन् । जराजर्जरितां पश्य, संसारस्य क सारता ? ॥ ५९ ॥
एतस्मिन् शुचिवस्तूनां, मलिनीकारकारणे । देहे जरापराधीने, मुधा मुह्यन्ति जन्तवः ॥ ६० ॥
विषं मामभृतं दीक्षामन्यथा मास्म मन्यथाः । तद् व्याघुट्य झटित्येव, गुरुं भज कुरु व्रतम् ॥ ६१ ॥
इति प्रबोधितः प्रीतो, नागिलाया गिरा चिरात् ।
साधु साध्विति तां श्रुत्वा, साधुः सूरिं रयादयात् ॥ ६२ ॥
आलोच्य तद् गुरोरग्रे, तदुग्रं स व्रतं व्यधात् । येनाजनिष्ट सौधर्मे, प्रभाभिर्भासुरः सुरः ॥ ६३ ॥
क्षेत्रे महाविदेहेऽथ, विजये पुष्कलाभिधे। देशे विश्वप्रिये पुण्डरीकिण्यां पुरि चक्रिणः ॥ ६४ ॥
पत्न्यां यशोधराख्यायां, वज्रदत्तस्य नन्दनः । नाम्ना सागरदत्तोऽभूद्, भवदत्तो दिवश्च्युतः ॥ ६५ ॥
॥ युग्मम् ॥
अथ पित्रा पवित्राङ्गीर्धन्याः कन्याः सहस्रशः । पुत्रः शत्रुद्रुमद्रोहकरिणा परिणायितः ॥ ६६ ॥
स समन्तात् समं ताभिः, क्रीडन् भूपालभूर्बभौ । मूर्तिमद्भिरिव स्फीतैः, स्वैर्भोगफलकर्मभिः ॥ ६७ ॥
एकदाऽनेकदारान्तर्वर्ती मन्दिरमूर्धनि । स्थितोऽन्तरिक्षे सोऽद्राक्षीत्, स्वर्णवर्णं पयोमुचम् ॥ ६८ ॥
तमाक्रान्तनभश्चक्रं, शिखाशिखरशेखरैः । पश्यन् मेरुमिव स्मेरसमाजः समजायत ॥ ६९ ॥
क्षणाद् वातोद्धते धाराधरे विधुरतां गते । भावेषु भङ्गुरीभावं, कुमारः स व्यचारयत् ॥ ७० ॥
प्रतिबुद्धः स्वयं बुद्ध्या, व्रतं जग्राह साग्रहः । ततः सागरदत्तोऽयं, सूरेरमृतसागरात् ॥ ७१ ॥
कृपाणतीव्रतातीव्रतायत्तेन तेन तत् । अज्ञानमवधि ज्ञानमवधिख्याति बिभ्रता ॥ ७२ ॥
तत्रैव विजये वीतशोकानामनि पत्तने । भवदेवोऽभवच्च्युत्वा, दिवः शिव इति श्रुतः ॥ ७३ ॥
पुत्रः पद्मरथस्याथो, वनमालाङ्गसम्भवः । कुमारः सुकुमाराभिः, कुमारीभिर्विवाहितः ॥ ७४ ॥
॥ युग्मम् ॥
स्थितः सह महेलाभिः, सोऽन्यदा सदनोपरि । नाम्ना कामसमृद्धस्य, सार्थवाहस्य वेश्मनि ॥ ७५ ॥
मुनिं सागरदत्ताख्यमाचभिक्षं विलोकयन् । स्वर्णवृष्टिं सुरैः सृष्टां, दृष्ट्वा हृष्टोऽभवत् तदा ॥ ७६ ॥
॥ युग्मम् ॥
अथ स्थानगतं पार्पतारणं कृतपारणम् । गत्वा नत्वा मुनिं राजाङ्गजोऽन्ते समुपाविशत् ॥ ७७ ॥
ततोऽसौ देशनां तेने, मुनिर्मनिभकेशरी । सर्वास्तथा कथाः पूर्वजन्मजाता न्यवेदयत् ॥ ७८ ॥

१ °स्यासौ, वन° संता॰ पाता॰ ॥ २ °क्षं व्यलोकयत् वता॰ ॥ ३ स्थाने गतं पाता॰ ॥
४ °पवारणं संता॰ ॥

सोऽपि भूपाङ्गभूः श्रुत्वा, विशुद्धः प्रतिबुद्धवान् । नत्वा यतिं गतः प्रष्टुं, पितरौ निश्चितव्रतः ॥ ७९ ॥
पितृभ्यामननुज्ञातस्ततश्चाकृतभोजनः । गत्वा पौषधशालायां, तस्थावस्थानमंहसाम् ॥ ८० ॥
इभ्यात्मजेन भूभर्तुरादेशाद् दृढधर्मणा । श्राद्धेन बोधितोऽभुङ्क्त, षष्ठादाचाम्लपारणः ॥ ८१ ॥
ईदृक्तपःप्रकाशी च, प्रासुकाशी व्रतीव सः । तत्र शुश्रूषितस्तुच्छ्यत्कर्मणा दृढधर्मणा ॥ ८२ ॥
अथ द्वादशवर्षान्ते, भावनिर्व्यूढसंयमः । विद्युन्मालीति देवोऽभूद्, ब्रह्मलोकेऽद्भुतद्युतिः ॥ ८३ ॥
श्रीवीरः समवासार्षीत्, पुरे राजगृहेऽन्यदा । तदीयपदपद्माली, विद्युन्माली तदाऽभवत् ॥ ८४ ॥
शक्रादिसुरचक्रेषु, काचेष्विव मणिर्ज्वलन् । अकरोद्दुष्करं किं किं, देवोऽसौ पूर्वजन्मनि ? ॥ ८५ ॥
श्रेणिकक्षोणिकान्तेन, पृष्टः स्पष्टमिति प्रभुः । तद् विद्युन्मालिनः सर्वं, पूर्ववृत्तं न्यवेदयत् ॥ ८६ ॥
॥ युग्मम् ॥
भविष्यति भुवि स्वामिन् !, कीदृशोऽयमतश्च्युतः ? । इति पृष्टे नृपेणाऽऽह, पुनस्त्रिभुवनप्रभुः ॥ ८७ ॥

## जम्बूस्वामिचरितम्

राजन् ! राजगृहेऽत्रैव, ऋषभश्रेष्ठिसूरसौ । जम्बूनामाऽवसर्पिण्यां, भावी चरमकेवली ॥ ८८ ॥
तद् विद्युन्मालिनः कान्ताश्चतस्रो विनयाऽऽनताः ।
तीर्थेशमिति पप्रच्छुः, काऽस्माकं भाविनी गतिः ? ॥ ८९ ॥
श्रेष्ठिनां तनुजीभूय, यूयमप्यस्य योषितः । भविष्यथ पुरेऽत्रैव, तदिदं विभुरभ्यधात् ॥ ९० ॥
अथ तद्दिवसादेव, स देवः सप्तमेऽह्नि । धारिण्या ऋषभश्रेष्ठिपत्न्याः कुक्षाववातरत् ॥ ९१ ॥
पूर्णैरथ दिनैः श्रेष्ठिप्रिया सुतमसूत सा । आनन्दामृतरोचिष्णुः, सरसीव सरोरुहम् ॥ ९२ ॥
पुरा च नगरेऽत्रैव, वैभारगिरिकानने । सुधर्मस्वामिनं नन्तुं, गताऽभूदृषभप्रिया ॥ ९३ ॥
सा शुश्राव तदा सिद्धपुत्रं विद्याधरं प्रति । कथ्यमानं गणभृता, भुवं जम्बूविचारणम् ॥ ९४ ॥
ततो जम्बूविचारान्ते, सा पप्रच्छ गणेश्वरम् । भविष्यति तनूजन्मा, कथं मे ? कथ्यतामिति ॥ ९५ ॥
गणेशं वीक्ष्य सावद्यप्रश्नतो मौनमास्थितम् । साऽभाषि धारिणी शीलधारिणी सिद्धसूनुना ॥ ९६ ॥
सति ! व्रतिपतिर्नेदं, सावद्यं कथयिष्यति । भवत्यै कथयिष्यामि, सुतार्थमहमप्यदः ॥ ९७ ॥
मम वाचा त्वमाचाम्लान्यष्टोत्तरशतं कुरु । पुत्रस्तदन्ते भावी ते, सिंहस्वप्नेन सूचितः ॥ ९८ ॥
इत्याकर्ण्य गृहं गत्वा, सा सर्वं तत् तथा व्यधात् । अपश्यच्चान्यदा स्वप्ने, सिंहमुत्सङ्गसङ्गतम् ॥ ९९ ॥
मातश्च पत्युराख्याय, वितेने जिनपूजनम् । अथ प्राचीव मासन्तं, काले सुतमसूत सा ॥ १०० ॥
असौ जम्बूविचारस्य, प्रक्रमे समभूदिति । पितृभ्यां विहितो जम्बूकुमार इति नामतः ॥ १०१ ॥
पद्मावती समुद्रस्य, प्रेयसी सुषुवे सुताम् । समुद्रश्रियमुन्मुद्रचन्द्रसान्द्रमुखत्विषम् ॥ १०२ ॥
समुद्रदत्तप्रेयस्या, जज्ञे कमलमालया । नन्दनी किल पद्मश्रीः, पद्मश्रीदस्युलोचना ॥ १०३ ॥
पुत्री सागरदत्तस्य, जनिता विजयश्रिया । पद्मसेनेति निम्छ्यसेनेव स्मरभूभुजः ॥ १०४ ॥
सुना कुबेरदत्तस्य, दयितायां जयश्रियाम् । आसीत् कनकसेनेति, कनकस्पर्धिदीधितिः ॥ १०५ ॥
विद्युन्मालिसुरस्यैताश्चतस्रश्चिचवल्लभाः । गृहेषु श्रेष्ठिनामेषामवतेरुर्दिवश्च्युताः ॥ १०६ ॥

१ देवोऽसौ संता० पाता० ॥ २ 'भयमघ' संता० ॥

तथा कुबेरसेनस्य, नमःसेनेति नन्दनी । सञ्जाता कमलवतीकुक्षिपल्वलवारला ॥ १०७ ॥
श्रेष्ठिश्रमणदत्तस्य, सुषेणाकुक्षिसम्भवा । सुताऽभूत् कनकश्रीस्तां, न कः श्रीवदमन्यत ? ॥ १०८ ॥
सुषुवे च सुषेणस्य, प्रिया वीरमती पुनः । सुतां कमलवत्याख्यां, साक्षादिव दिवः श्रियम् ॥ १०९ ॥
वसुपालितगेहिन्या, सुषुवे जयसेनया । जयश्री रतिरूपस्य, जयश्रीरिति नन्दनी ॥ ११० ॥
दिक्पालराजधानीनामष्टौ मूर्ता इव श्रियः । सेवन्ते तत्पुरं वाला, जैत्रं जम्बूगुणेन ताः ॥ १११ ॥
दातुं ताः पितृभिर्जम्बूस्वामिने ऋषभोऽर्थितः । सर्वं मेने न कस्तुल्यगुणसङ्गाय कौतुकी ? ॥ ११२ ॥
तदानीं च महामोहमेघसन्दोहमारुतः । श्रीसुधर्मा समायासीद्, वैभारगिरिकाननम् ॥ ११३ ॥
श्रुते तस्मिन् समायाते, निर्यातं नगरादथ । जनैर्भृङ्गैरिवाम्भोजादुदितेऽम्भोजबान्धवे ॥ ११४ ॥
श्रीसुधर्मगणाधीशं, नमस्कर्तुं समागमत् । तदा जम्बूकुमारोऽपि, समारोपितसम्मदः ॥ ११५ ॥
तदा मुनीन्दुः प्रारेभे, देशनां दशनांशुभिः । पुरो जम्बूवपुः सिञ्चन्, प्रसादैरिव देहिभिः ॥ ११६ ॥
भवेद् भवार्णवः पुंसां, सुतरः सुतरामसौ । न्यञ्चनोदञ्चनोग्राश्चेन्न स्युः श्रीचयवीचयः ॥ ११७ ॥
मेघानामिव लोकानामायुर्गलति नीरवत् । चपलेव चला लक्ष्मीः, पाण्डुतेवैति विश्वसा ॥ ११८ ॥
तदायुषा च लक्ष्म्या च, वपुषा चास्थिरात्मना । चिरस्थिरतरं रत्नत्रयं भाव्यं विवेकिना ॥ ११९ ॥

तत्रोपाश्रय-भैषज्य-पुस्तका-ऽन्नां-ऽशुकादिभिः ।
साहाय्यं ज्ञानिनां तन्वन्, ज्ञानमाराधयेद् गृही ॥ १२० ॥

सङ्घवात्सल्य-जैनेशवेश्म-यात्रा-ऽर्चनादिभिः । प्रभोः प्रभावयँस्तीर्थं, सम्यक् सम्यक्त्वमर्जयेत् ॥ १२१ ॥
भक्त्या चारित्रपात्रेषु, तथाऽऽवश्यककर्मभिः । तपोभिरपि चारित्रं, गृहमेधी समेधयेत् ॥ १२२ ॥
काले पाठादिभिर्ज्ञानमशङ्काद्यैश्च दर्शनम् । मूलोत्तरगुणैः शुद्धैश्चारित्रं भजते यतिः ॥ १२३ ॥
इति रत्नत्रयालम्भे, हतमोहतमोभरैः । चिराद् गृहस्थैः सद्योऽपि, यतिभिः शाश्वतं पदम् ॥ १२४ ॥
ये तु मोहमहग्रस्ताः, प्रमादस्य वशंवदाः । अशरण्यैर्भवारण्ये, भ्रमितव्यं सदाऽपि तैः ॥ १२५ ॥
जम्बूरम्बूज्ज्वलं पीत्वा, घनादिव गुरोर्वचः । महीरुह इवाभुग्नत्, सद्यो भवदवव्यथाम् ॥ १२६ ॥
नत्वा मुनीन्द्रमुन्निद्रव्रतग्रहमहोद्यमः । जगामायममायः सन्, सदनं मदनं द्विषन् ॥ १२७ ॥
सत्वरः पितरौ नत्वा, जम्बूः कम्बूल्लसद्यशाः । स जगादायमादाय, व्रतं भीतो भवाम्यहम् ॥ १२८ ॥
इत्याकर्ण्य ततः कर्णतप्तत्रपुनिभं वचः । सुतं व्रतनिषेधाय, पितरावूचतुस्तराम् ॥ १२९ ॥
एकस्त्वमावयोर्दीपो, भानुर्भू-नभसोरिव । त्वां विना वत्स ! नितमां, तमांस्यभिभवन्ति नौ ॥ १३० ॥
मनोरथशताहूतस्तपोभिरतिदुष्करैः । दुर्लभस्तात ! लब्धोऽसि, त्वमुदुम्बरपुष्पवत् ॥ १३१ ॥
तच्चिरोद्भूतमस्माकं, मनोरथमहीरुहम् । विदग्ध ! दग्धुं किं नाम, वाग्ज्वालाभिः प्रगल्भसे ? ॥ १३२ ॥
ययाचिरे चिरेणैताः, दासीकृतरतिद्युतः । अष्टौ याः कन्यकास्तुभ्यं, त्यजस्येताः कुतः सुत ! ? ॥ १३३ ॥
विवाहमण्डपान्तस्त्वं, वधूभिरभितो वृतः । वशाभिरिव यूथेशो, मानसं नौ प्रमोदय ॥ १३४ ॥
त्वत्सङ्गसुभगम्मन्याः, कन्याः परिणयन्निमाः । कुतूहलं श्रुतोलैल्लुरावयोः पूरयाऽऽवयोः ॥ १३५ ॥
आशानामिव तत् तासामन्तश्चन्द्र इव स्फुरन् । पुण्यवन्नावयोर्नेत्रकुमुदानां मुदं कुरु ॥ १३६ ॥

---

१ धारिमती पाता० ॥ २ °गुणानताः खंता० ॥ ३ प्रमोदैरि° खंता० ॥ ४ स्वसङ्ग° वता० । स्वःसङ्ग° पातासं० ॥ ५ °तोल्लोत्प° पाता० ॥

श्रुत्वा पित्रोरिमां वाचमचलन्तनिश्चयः । उचितज्ञः कुमारोऽयमभ्यधान्मधुरं वचः ॥ १३७ ॥
तावदाचर्यत ब्रह्मचर्याय नियमो मया । कुतूहलाय वां कार्ये, पाणिग्रहणमप्यदः ॥ १३८ ॥
विवाहस्य द्वितीयेऽह्नि, ग्रहीष्यामि पुनर्व्रतम् । क्षेप्स्यत्तद्भसवात्सल्यान्नाहं भवदवानले ॥ १३९ ॥
आसां मृगीदृशां प्रेमस्थेमसम्बन्धबन्धने । पैतित्वेन पतित्वाऽसौ, क्व मोक्षाय यतिष्यते ? ॥ १४० ॥
इत्यालोच्य मिथस्ताभ्यां, पितृभ्यां तन्मतं वचः । अकारि च मुदा पाणिग्रहोपक्रमणक्रमः ॥ १४१ ॥
॥ युग्मम् ॥

अथ जम्बूकुमारेण, ज्ञापिते स्वव्रतोद्यमे । पितृन् किंकार्यतामूढानाहुस्तानिति कन्यकाः ॥ १४२ ॥
इहापि परलोकेऽपि, जम्बूस्वामी गतिः स नः । मार्तण्ड इव मार्तण्डग्रावपावकरोचिषाम् ॥ १४३ ॥
स मन्मथपथेऽस्माभिस्तेनाऽऽस्माध्वनि वा वयम् । नेतव्याः सत्यमित्यस्तु, स्पर्धाबन्धः परस्परम् ॥ १४४ ॥
महासतीषु धन्यानां, कन्यानां वचनैरिति । तेऽप्युद्दिश्य विवाहस्य, दिनमानन्दिनः स्थिताः ॥ १४५ ॥
अथाऽऽननेन्दुनिर्गच्छद्दुल्लसुधया तया । स्त्रीषु सञ्जीवयन्तीषु, भवदग्धं मनोभवम् ॥ १४६ ॥
बन्धूनामुपरोधेन, विरोधेन तु चेतसः । लग्ने जम्बूकुमारोऽयमुपयेमे कुमारिकाः ॥ १४७ ॥
स हताभिः स्मरशरैः, सह ताभिस्तदा वदन् । गतस्पृहो गृहावासे, वासवेश्मन्यवास्थित ॥ १४८ ॥
इतश्च विन्ध्यो विन्ध्याद्रौ, व्यधाज्जयपुरेश्वरम् ।
पुत्रं प्रभमथ ज्येष्ठः, प्रभवो निरगात् क्रुधा ॥ १४९ ॥
चौरपञ्चशतीयुक्तः, कुर्वन्नुर्व्यां स चौरिकाम् । जज्ञेऽवस्वापिनी-तालोद्घाटनीविद्ययोः पदम् ॥ १५० ॥
गृहं तदा तदागत्य, जम्बूस्वामिनिषेवितम् । विद्ये प्रयुज्य तन्वानश्चौर्यं स्तम्भमवाप सः ॥ १५१ ॥
केनाहं स्तम्भितो भृत्यैः, सहितोऽपीति चिन्तयन् । इत्थं प्रतिदिशं चौरग्रामणीरक्षिपत् ततः ॥ १५२ ॥
अथ सुप्तेऽखिले लोके, कुमारं स्त्रीभिरावृतम् । अपश्यज्जाग्रतं सोऽब्जपण्डे कैरवपण्डवत् ॥ १५३ ॥
प्रभवस्तमुवाचाथ, जम्बूनामानमानतः । स्तम्भनीं देहि मे विद्यां, गृहन् विद्याद्वयं मम ॥ १५४ ॥
जम्बूस्वामी ततो वाचमाचष्टे स्म शमैकभूः ।
नास्ति मे स्तम्भनी विद्या, त्वद्विद्याभ्यां च किं मम ? ॥ १५५ ॥
काङ्क्षामि यदहं गेहविरहं निरहङ्कृतिः । व्रतं प्रातर्ग्रहीष्यामि, सुधर्मस्वामिसन्निधौ ॥ १५६ ॥
अथाऽऽह प्रभवः श्रीमन्निति श्रीमन्मार्ग् भवान् ।
भुनक्ति नैव किं भोगान् ?, व्रताय यतते कुतः ? ॥ १५७ ॥
वरेणेदमथावादि, तथावादिनि तस्करे । सावधानीभवत्कर्णस्त्वमाकर्णय मद्गिरम् ॥ १५८ ॥

## मधुबिन्दूदाहरणम्

अगरम्यो महारण्ये, सार्थः कोऽपि मलिम्लुचैः । अमुष्यत यथा व्योम्नि, तारामारः पयोधरैः ॥ १५९ ॥
सार्थे श्रते समन्तेऽपि, पुमानटविकोटरे । तस्मिन्नेकः स्थितो मूढः, शारीवोमदवोद्धृतः ॥ १६० ॥

---

१ पतित्वे विनिपत्यासौ, पाता० ॥ २ 'स्तासां, पितृभिः तन्म' पाता० ॥ ३ 'स्पर्धेव' संता० पाता० ॥ ४ 'दुल्लोलसु' पाता० ॥ ५ 'दग्धम' पाता० ॥ ६ 'न्यवस्थितः' संता० पाता० ॥ ७ प्रभाव' संता० पाता० ॥

सिन्धुरेणोद्धुरेणाथ, समारब्धः स कानने । धावन् मृत्युभयाज्जीर्णकूपे झम्पामयं ददौ ॥ १६१ ॥
तत्रावटतटोद्भूतवटशाखाविनिर्गतम् । पादं बन्धुमिवामीष्टमाश्लिष्टः सोऽन्तरापतत् ॥ १६२ ॥
अथ कूपतलेऽद्राक्षीत्, करालमुखकोटरम् । क्षणादजगरं कालनगरोदरसोदरम् ॥ १६३ ॥
परितोऽपश्यदाशासु, निराशासु स्थितिश्च सः । चतुरो यमनिर्मुक्तान्, यामिकानिव पन्नगान् ॥ १६४ ॥
किञ्चाऽऽलम्बनशाखायामीक्षामास सिता-ऽसितौ । आखू मूलं खनन्तौ स, निष्कारणखलाविव ॥ १६५ ॥
तस्य दुर्भूपवत् कूपद्वारस्थस्य विषाणिनः । स ददर्श कुटुम्बीव, क्लीबः प्रसृमरं करम् ॥ १६६ ॥
मधुच्छत्रोत्थिता हस्तिहस्ताहतिचले वटे । लग्नाश्च मक्षिकास्तस्मिन्, ऋजौ लुब्धा इवेश्वरे ॥ १६७ ॥
मधुमण्डाच्युतास्तस्य, वदने मधुबिन्दवः । निपेतुश्चातकस्येव, मन्दवारिदविप्रुषः ॥ १६८ ॥
नासौ मधुरसास्वादसुखलालसमानसः । तदनेकविधं दुःखं, स्मरति स्म रतिं वहन् ॥ १६९ ॥
अथ व्योमपथक्रोडे, कोऽपि विद्याधरश्चरन् । तं वीक्ष्य करुणाविष्टः, कष्टुं बन्धुरिवाऽऽययौ ॥ १७० ॥
दत्तहस्ते ततस्तस्मिन्नुपहासिनि हर्षितः । स्थितिर्वा निर्गमो वाऽस्य, किं युक्तमिति कथ्यताम् ॥ १७१ ॥
अथो हसन्नसावाह, कुमारमिति राजसूः । किं पृष्टं ? वेत्ति मूढोऽपि, निःसृतिस्तस्य शस्यते ॥ १७२ ॥
व्यक्तमित्युक्तवत्यस्मिन्नुपहासिनि हर्षितः । ऊचे जम्बूकुमारोऽपि, सुधाकवचितं वचः ॥ १७३ ॥

## मधुबिन्द्वाख्यानकोपनयः

पुरुषो यः स संसारी, संसारस्तु महाटवी । मानुष्यं जन्म कूपश्च, नरकोऽजगरस्त्वधः ॥ १७४ ॥
तथा कषायाश्चत्वारश्चतुर्दिक्षु भुजङ्गमाः । यमश्च मूर्ध्नि मातङ्गो, मक्षिका व्याधयः पुनः ॥ १७५ ॥
छिन्तश्च द्रुलतामायुराखू पक्षौ सिता-ऽसितौ । प्रीणन्ति जन्तुं कष्टेऽस्मिन्, विषया मधुबिन्दवः ॥ १७६ ॥
सुधर्मस्वामिना विद्याधरेणेवेति कष्टतः । कृष्यमाणो निषिध्येऽहं, किं त्वया विषयेच्छया ? ॥ १७७ ॥
इत्थं विषयसम्बन्धनिषेधेन निरुत्तरः । प्रभवः प्राह दन्तांशुनासीरविदितं वचः ॥ १७८ ॥
कुटुम्बमिति सन्त्यज्य, निःशेषं निर्विशेषधीः । कुर्वन् जनकयोः पीडां, व्रीडामपि विमुञ्चसि ॥ १७९ ॥
उक्ते च प्रभवेणेति, श्रीजम्बूरवदत्तदा । महात्मन्! श्रूयतामेकं, ज्ञातेयस्य कथानकम् ॥ १८० ॥

## कुबेरदत्त-कुबेरदत्ताख्यानकम्

आसीत् कुबेरसेनेति[1], मथुरायां पणाङ्गना । यदीयवदनस्येव, स्नपनप्रतिमा शशी ॥ १८१ ॥
सा कदाऽप्यथ कष्टेन, तनयां तनयं च तौ । कीर्ति-प्रतापौ भूपासिलेखेवासूत नूतनौ ॥ १८२ ॥
तौ त्याजयन्त्या कुट्टिन्या, निराकृत्य वचोविषम् । एकादशाहं सा हन्त!, पाययामास तौ पयः ॥ १८३ ॥
कुबेरदत्त इत्याख्याजुषं पुत्रस्य मुद्रिकाम् । पुत्र्याः कुबेरदत्तेति, नामभाजं च सा व्यधात् ॥ १८४ ॥
मञ्जूषायामथो रत्नराजिभाजि न्ययोजयत् । तदपत्यद्वयं माता, कातरा कुट्टनीभयात् ॥ १८५ ॥
यमुनाम्भसि मञ्जूषां, सुखपेटामिवात्मनः । चिक्षेप वितरन्तीव, सा जलाञ्जलिमश्रुभिः ॥ १८६ ॥
अथ सूर्यपुरोपान्ते, यमुनावारिवाहिता । पेटेयमिभ्ययुग्मेन, दृष्टा हृष्टान्तरात्मना ॥ १८७ ॥
आकृष्योद्घाट्य तां पेटामन्तर्वीक्ष्य शिशुद्वयम् । दायादाविव सर्वस्वमाददातां विभज्य तौ ॥ १८८ ॥

१ 'ण्डच्यु' पाता० ॥ २ 'स्मिन्, मधुबिन्दुविलोभिनः । स्थिति' संता० पाता० ॥ ३ 'ति वेश्या कापि पुरे पुरा । यदी' पाता० ॥

तौ तयोः श्रेष्ठिनोर्यत्नात्, संवर्धेते सहोदरौ । यथा वलक्षपक्षस्य, कौमुदी-कौमुदीपती ॥ १८९ ॥
अङ्गुलीमुद्रिकानाम्ना, ख्यातयोरेतयोर्मिथः । विवाहं चक्रतुः श्रेष्ठिमुख्यौ तौ युग्मिनोरिव ॥ १९० ॥
क्षिप्ता कुबेरदत्तेन, प्रेमवत्याः करेऽन्यदा । निजनामाङ्किता मुद्रा, वैराग्यस्येव पत्रिका ॥ १९१ ॥
वीक्ष्य मुद्रां स्वमुद्रावत्, प्रियं सा प्राह विस्मिता । नाम्नाऽङ्केन च किं साम्यमनयोरावयोरिव ! ॥ १९२ ॥
तदावां सोदरौ शङ्के, नानयोः श्रेष्ठिनोः सुतौ । आभ्यामपि क्वचिल्लब्धावज्ञानात् परिणायितौ ॥ १९३ ॥
सत्यमत्याग्रहादद्य, प्रष्टव्यौ पितरौ ततः । ज्ञातव्यमेव जन्म स्वमालोच्येति समुत्थितौ ॥ १९४ ॥
पितरावाग्रहात् पृष्ट्वा, मत्वाऽऽत्मचरितं च तत् । निश्चित्य सोदरत्वं च, पाणिग्रहमशोचताम् ॥ १९५ ॥
इति निःसारसंसारवैराद् वैराग्यवासितौ । स्थितावधोमुखावेव, प्रगे कुमुदिनीन्दुवत् ॥ १९६ ॥
ततः कुबेरमापृच्छ्य, पितरौ च विरक्तया । कुबेरदत्तयाऽग्राहि, जिनदीक्षाऽतिदक्षया ॥ १९७ ॥
स्वयं नामाङ्कितं मुद्रारत्नमस्थगयच्च सा । बोधं कुबेरदत्तस्य, मूर्तिमन्तमिवोज्ज्वलम् ॥ १९८ ॥
गतः कुबेरदत्तस्तु, भूरिक्रीतक्रयाणकः । मथुरायां पुरि स्फारव्यवहारविहारतः ॥ १९९ ॥
यस्यां कुबेरसेनायामुत्पन्नः स किलाऽभवत् ।
शशी निशीव कान्तोऽभूत्, तस्या एव स धिग् ! विधिम् ॥ २०० ॥
कालात् कुबेरसेनायां, कुबेरस्य सुतोऽभवत् । भवव्यामोहसर्वस्वसारेणेव विनिर्मितः ॥ २०१ ॥
अथोत्पन्नावधिज्ञाना, बन्धोर्बोधार्थिनी ततः । सर्वं कुबेरदत्ता तदपश्यदसमञ्जसम् : ॥ २०२ ॥
गोपितस्वाङ्गुलीयाऽसावनुज्ञाप्य प्रवर्तिनीम् । भवाब्धौ मज्जतो भ्रातुर्बेडेव मथुरां ययौ ॥ २०३ ॥
पुरः कुबेरसेनाया, याचित्वा वसतिं च सा । तस्थावस्थानकेऽप्यन्योपकृतिः कृतिनां व्रतम् ॥ २०४ ॥
पुरः स्फुरन्तमालोक्य, कुबेराङ्गजमन्यदा । व्रतिनी व्रतिनीतिज्ञा, सा बभाषे मृषोज्झिता ॥ २०५ ॥
बाल ! त्वमसि मे पत्युः, सोदरत्वेन देवरः । माता तथाऽऽवयोरेका, तेनासि मम सोदरः ॥ २०६ ॥
जातोऽसि मम पत्या त्वमपत्यमिति तेन मे । त्वत्पिता मे सपत्नीभूः, पौत्रस्त्वमसि मे ततः ॥ २०७ ॥
मन्मातुः पतिसोदर्यस्त्वं पितृव्योऽसि तन्मम । सहोदरस्य सूनुस्त्वं, भ्रातृव्योऽप्यसि मे ततः ॥ २०८ ॥
माताऽपि तव माता मे, धृतावावां ययोदरे । सा मन्मातृभुजङ्गस्य, माता तन्मे पितामही ॥ २०९ ॥
मत्सपत्नीतनूजस्य, पत्नी सा मे वधूरिति । मद्भर्तुः साऽभवन्माता, मम श्वश्रूस्ततो मता ॥ २१० ॥
मद्बान्धवस्य पत्नी सा, भ्रातृजाया ततो मम । सा पुनर्मत्पतेः पत्नी, सपत्नीति ममाभवत् ॥ २११ ॥
मज्जनन्या भुजङ्गो यत्, त्वत्पिता तत् पिता मम ।
मत्पितृव्यस्य ते सोऽभूत्, पिता तन्मे पितामहः ॥ २१२ ॥
मम तस्य च माताऽभूदेका मे सोदरः स तत् । मद्भर्तृजननीभर्ता, स तेन श्वशुरोऽपि मे ॥ २१३ ॥
स च जग्राह मत्पाणिं, जातः पतिरतो मम । स मदीयसपत्न्याश्च, सूनुः सूनुर्ममाऽप्यतः ॥ २१४ ॥
अथो मिथोविरुद्धं तन्निशम्य शमिनीवचः । कुबेरोऽपृच्छदागत्य, किमेतदिति विस्मयी ॥ २१५ ॥
इति तस्मै कुबेराय, पृच्छते व्रतिनी ततः । तन्मुद्रारत्नमज्ञानध्वान्तदीपमिवाऽर्पयत् ॥ २१६ ॥
मुद्रारत्नेन तेनाथ, दिननाथनिभेन सः । प्रबुद्धोऽन्तर्गतं मोहं, भृङ्गं पद्म इवामुचत् ॥ २१७ ॥
लज्जितः स्वचरित्रेण, गृहीत्वा व्रतमुज्ज्वलम् । धीमान् कुबेरदत्तोऽसौ, यौवनेऽपि ययौ वने ॥ २१८ ॥

१ 'मोर्गेदे, संघ' संता० ॥ २ 'स्यभिरया' संता० ॥ ३ मत्सपत्न्या त्व' संता० ॥ ४ 'स्यः स ते' पाता० ॥

व्रतव्रततिवृक्षेण, यशोनिर्झरभूभृता । कर्मकुञ्जरसिंहेन, तेनारण्यानि रेजिरे ॥ २१९ ॥
भावनां भावयन्नेष, स्मृतपञ्चनमस्कृतिः । जगाम त्रैदिवं धाम, कामसामजकेशरी ॥ २२० ॥
मत्वा कुबेरसेनाऽपि, तादृग् विषयविप्लवम् । भवे विरक्ता जग्राह, गृहवासोचितं व्रतम् ॥ २२१ ॥
इत्थं कथाप्रथापाथोधौतमोहमलस्य मे । कुतो ज्ञातेयसम्बन्धः, प्रभव ! प्रभविष्यति ? ॥ २२२ ॥
राजपुत्रः पुनः प्राह, कुतोऽपुत्रस्य ते गतिः ? । जगाद जम्बूः पुत्रस्य, कथयामि कथां शृणु ॥ २२३ ॥

## महेश्वरदत्ताख्यानकम्

अस्ति देवालयस्तम्भोत्तम्भितव्योममण्डपा । निकेतमालिनी ख्याता, पुरी नाम्ना तमालिनी ॥ २२४ ॥
श्रीमहेश्वरदत्तोऽभूदिभ्यस्तत्र पुराग्रणीः । प्रथितः प्रौढमिथ्यात्वपाथोधिजलकुञ्जरः ॥ २२५ ॥
दुश्चारिणीकुलाचार्यभूता भूताऽस्य वल्लभा । नागिलेति पुरि ख्याता, कामारामैकसारणिः ॥ २२६ ॥
सोऽन्यदा महिषं हत्वा, जनकश्राद्धपर्वणि । अङ्कस्थं तस्य मांसेन, लग्नो भोजयितुं सुतम् ॥ २२७ ॥
तदा च गृहमभ्येत्य, वलितो वक्रितानन: । दृष्टश्रेष्ठी मुनिश्रेष्ठः, पठन् श्लोकमिमं मुहुः ॥ २२८ ॥
पुष्णाति स्वपितुर्मांसैः, शत्रुमुत्सङ्गसङ्गिनम् । विधत्ते च पितुः श्राद्धमहो ! मोहविजृम्भितम् ॥ २२९ ॥
महेश्वरस्तदाकर्ण्य, तूर्णमेत्य मुनीश्वरम् । नत्वाऽपृच्छत् प्रभो ! प्रोक्तं, किमेतदसमञ्जसम् ? ॥ २३० ॥
इत्याग्रहपरे तत्रोवाच वाचंयमाग्रणीः । विज्ञाय ज्ञानतस्तस्योपकारं करुणापरः ॥ २३१ ॥
नागिलायाः किलाऽऽख्यातो, यस्त्वयोपपतिः पुरा ।
अघानि घनमावासक्रोडे क्रीडन् यदृच्छया ॥ २३२ ॥
तत्कालमेव मुक्तात्मवीर्ये एवावतीर्य सः । नागिलोदरजातत्वात्, तवायं तनयोऽभवत् ॥ २३३ ॥
महिषस्याऽऽमिषैर्यस्य, भवता तर्पितः पिता । जीवः समुद्रदत्तस्य, स एष भवतः पितुः ॥ २३४ ॥
याऽसौ शुनी पुनर्द्वारि, महिषास्थीनि खादति । मन्यस्व मतिमन्नेतां, स्वामम्बां बहुलाभिधाम् ॥ २३५ ॥
त्वद्गृहे ज्ञानतो ज्ञात्वा, तदेतदसमञ्जसम् । तद्बोधाय तव श्लोकं, पठित्वा वलितोऽस्म्यहम् ॥ २३६ ॥
*यदिदं भवताऽऽख्यातमत्र कः प्रत्ययः प्रभो ! ? । पृष्टो महेश्वरेणेति, स मुनिः पुनरब्रवीत्* ॥ २३७ ॥
अन्तर्गृहं शुनी नीता, जातजातिस्मृतिः सती । रत्नजातं तदेषा तन्निखातं दर्शयिष्यति ॥ २३८ ॥
इत्युदित्वा मुनौ याते, या तेन कथिता शुनी । तत्तया दर्शितं तस्मै, तयाऽन्तर्गृहनीतया ॥ २३९ ॥
साधोराधोरणस्येव, स तस्माद् वचनाङ्कुशात् । उत्पथस्थितिमव्याजं, तत्याज श्रेष्ठिकुञ्जरः ॥ २४० ॥
पितृ-पुत्रादिसम्बन्धमवबुध्येति विप्लुतम् । मन्यते मित्र ! न त्राता, तदात्माऽपि कुतः सुतः ? ॥ २४१ ॥
समुद्रश्रीः समुद्रश्रीः, प्रियमित्थमथाभ्यधात् । प्रेममुक्तं मयाऽप्युक्तं, युक्तमित्यवधार्यताम् ॥ २४२ ॥
इमां विभूतिमुद्भूतां, मुक्त्वा मुक्त्यै कृताग्रहः । मा भूस्त्वमुभयभ्रष्टः, स्वामिन् ! स इव कर्षुकः ॥ २४३ ॥

## कृषिकाराख्यानकम्

ग्रामः सुसीमनामाऽस्ति, सीमन्तो देशसम्पदः । निवासदुर्गं यः श्रीणां, सर्वेनः कणपर्वतैः ॥ २४४ ॥

१ प्रथितप्रौढ° संता॰ ॥

तत्राऽभूत् कर्पुकः कोऽपि, ग्रामीणग्रामणीर्महान् ।
कङ्गु-कोद्रवमुख्यानि, धान्यानि वपति स्म सः ॥ २४५ ॥
अथ धान्योत्करे तस्मिन्, प्राच्यपुण्य इवोद्धृते । अकुण्ठस्वजनोत्कण्ठो, दूरग्रामं जगाम सः ॥ २४६ ॥
जहृपुः कर्पुके तत्र, दृष्टेऽपि स्वजनास्ततः । घनाघन इवोत्सुक्यप्रचलाः प्रचलाकिनः ॥ २४७ ॥
तं नमश्चक्रिरे केऽपि, केऽपि तेन च नीचकैः । गृहं तदा तदीयं तत्, तोषैकार्णवतां गतम् ॥ २४८ ॥
अथो पृथुगुडस्पष्टस्वादुमण्डकमण्डलीम् । अभुक्तपूर्वी पूर्णेन्दुमालामिव स भोजितः ॥ २४९ ॥
सहर्षः कर्पुकोऽवादीत्, ततस्तान् स्वजनान् निजान् ।
भोः ! सुधाऽपि मुधा तत्र, यत्रैते गुडमण्डकाः ॥ २५० ॥
तद् दत्त बीजमेतेषां, निजग्रामे वपामि यत् । येन तस्मिन् समस्तोऽपि, स्यात् सुधाभोजनो जनः ॥ २५१ ॥
इक्षु-गोधूमयोर्बीजमेतैस्तस्य समर्पितम् । अरघट्टेक्षुवाटादिकर्मापि ज्ञापितं ततः ॥ २५२ ॥
बीजं मुदा तदादाय, सदनाय समुत्सुकः । दुःस्थो धनमिवोपार्ज्य, तदाऽनार्यः स निर्ययौ ॥ २५३ ॥
सद्यः स्वग्राममासाद्य, वार्यमाणोऽपि नन्दनैः । जातकल्पमपि स्वल्पमतिः क्षेत्रं लुलाव सः ॥ २५४ ॥
सञ्चितेनाथ वित्तेन, तेन मण्डकलोभिना । पातालरूपः कूपोऽत्र, निर्मातुमुपचक्रमे ॥ २५५ ॥
खानं खानं ततः कूपं, नोदबिन्दुरपीक्षितः । तेन भाग्यच्युतेनेव, द्रव्यांशोऽपि धनार्थिना ॥ २५६ ॥
अधन्यस्य न धान्यानि, न चार्थश्चिरसञ्चितः । अतिलुब्धस्य तस्याऽऽसन्, न च ते गुडमण्डकाः ॥ २५७ ॥
त्वमप्युपनतानेवं, प्रभो ! भोगान् परित्यजन् । मुक्तिश्रीसुखलोभेनोभयभ्रष्टो भविष्यसि ॥ २५८ ॥
अथ जम्बूकुमारोऽपि, तामुवाच यशस्विनि ! । मांसातिलोलकाकोलकेलिं न कलयाम्यहम् ॥२५९॥

## मांसलोलुपस्य काकस्याख्यानकम्

धात्रीधम्मिल्लतुल्योऽस्ति, प्रसिद्धो विन्ध्यभूधरः । सोत्सेकाः केकिनो यत्र, गर्जद्भिः कुञ्जरैर्घनैः ॥ २६० ॥
सङ्कुप इव विन्ध्यस्य, महिमेव च जङ्गमः । कोऽपि क्रोडेऽस्य चिक्रीड, दुर्धरः सिन्धुरेश्वरः ॥ २६१ ॥
अथ दुर्भूपवद् भीष्मे, ग्रीष्मे तापयति क्षितिम् । विन्ध्याद्रितनयां रेवां, सेवार्थमुपजग्मिवान् ॥ २६२ ॥
॥ कुञ्जरो जरोपाघ्नशक्तिर्गम्भीरम्बलत्पदः । श्रोतस्तीरावनीमण्डे, गण्डशैल इवापतत् ॥ २६३ ॥
॥ युग्मम् ॥
दन्तिनो दुर्बलस्यास्य, कान्तागन्तरपातिनः । असुरत्नं हृतं कालकिङ्करैस्तस्करैरिव ॥ २६४ ॥
दुष्टा संरिष्टयामासुर्गतासुमथ तं द्विपम् । शृगालप्रमुखाः स्वामिमुक्तं पुरमिवारयः ॥ २६५ ॥
आहृत्याऽऽहृत्य मांसानि, निम्नीर्णं ते वितेनिरे । द्विरदस्य गुदे द्वारं, नरकस्येव दुर्धियः ॥ २६६ ॥
द्वारेण कणिमस्तेन, करटाश्चटा इव । मारमास्वादयामासुः, प्रविश्याऽऽशु सहस्रशः ॥ २६७ ॥
निगोद इव तत्र, तन्वानाना मनाऽऽनम् । जन्तूनामिव काकानां, कोऽप्यभव्य इव स्थितः ॥ २६८ ॥
अन्तरन्तर्यमी काको, मांसान्यास्वादयन्नयम् । मनन् गजपतेरङ्गं, सुरङ्गाकृदिव क्षितिम् ॥ २६९ ॥

१ 'धाऽप्यत्र' पत्त० ॥ २ 'मनिस्य' संवासं० पत्त० ॥ ३ चार्थश्चिरसञ्चिताः संवा० ॥ ४ 'स्पर्धी' पत्त० ॥ ५ आहृत्याऽऽहृत्य मां' पत्त० ॥ ६ द्वारा करटिनस्तेन, पत्त० ॥

करटेऽन्तर्गते तत्र, क्रूरे चौर इव क्षणात् । आरक्षक इव ग्रीष्मो, गुदद्वारममीमिलत् ॥ २७० ॥
भूरिवर्षासु वर्षासु, परासुस्तदसौ द्विपः । क्रोडे वीचीकरैर्नीतो, मात्रेव सरिता सुतः ॥ २७१ ॥
गतोऽन्तर्वारिधेरेव, रेवावारिप्रवाहितः । इभः पोतनिभः काकं, साकं तमपि सोऽनयत् ॥ २७२ ॥
अथ तस्य गुदद्वारि, विशद्वारिविदारिते । निःससाराहिदष्टस्य, चिराज्जीव इव द्विकः ॥ २७३ ॥
आशु निःसृत्य संश्रित्य, वपुस्तस्य द्विपस्य सः । दिक्षु काको वराकोऽथ, साक्षेपं चक्षुरक्षिपत् ॥ २७४ ॥
अयं तोयमयं विश्वं, पश्यन् नश्यँश्चतुर्दिशम् । पुनर्व्यावृत्य तत्रैव, तस्थौ करिकलेवरे ॥ २७५ ॥
अथ वारिभरापूर्णे, मग्ने करिणि मग्नवान् । द्विकः सोऽपि तदाधारः, स्वामिनीवानुजीवकः ॥ २७६ ॥
काकवत् करिणः काये, स्त्रीनिकायेऽनुरागवान् । कथं नाम निमज्जामि, सोऽहं मोहेऽम्बुधाविव ? ॥ २७७ ॥
अथाभाषिष्ट निम्छद्मश्रीः पद्मश्रीरदस्तदा । न वा नरवर ! प्रज्ञा, वानरस्येव तस्य ते ॥ २७८ ॥

वानराख्यानकम्

जातख्याति क्षितावस्ति, हस्तिनागपुरं पुरम् । चन्द्राश्मकलशैर्यत्र, स्वयम्भुपयसः प्रपाः ॥ २७९ ॥
तत्रारिकेशरी नाम, क्षोणिसुश्रोणिवल्लभः । यद्यशोभिरशोभिष्ट, विष्टपं नित्यचन्द्रिकम् ॥ २८० ॥
अनेकदास-भूपालैरेकदा सहितो नृपः । मृगव्यायां जगामायमानीलनिचुलाञ्चितः ॥ २८१ ॥
धीरैः सह सहस्रेण, स विवेश वनाद् वनम् । घनायनं निशानाथ, इव ताराभरैः समं ॥ २८२ ॥
वर्षत्सु शरधाराभिर्वीरेषु जलदेष्विव । निकुञ्जपुञ्जगेहेषु, निलीनं वनचारिभिः ॥ २८३ ॥
गर्वात् तथा स्थिरीभूताः, सिंहास्तद्दृष्टयः । यथा मृगैर्भयोत्तालैर्दवफालैर्ललङ्घिरे ॥ २८४ ॥
अथायं पृथिवीनाथो, मृगमाथोद्धतश्रमः । अवाप तापच्छेदाय, जाह्नवीं स्वयशःसखीम् ॥ २८५ ॥
जाह्नवीतीरकान्तारे, तद्वीरैः स्वैरचारिभिः । नानाविधसुधाह्वविद्यमानफलोत्सुकैः ॥ २८६ ॥
अदर्शि कामिनी काऽपि, पुष्पभूषणभूषिता । प्रत्यक्षा वनदेवीव, वनश्रीरिव जङ्गमा ॥ २८७ ॥
॥ युग्मम् ॥
अथाऽऽदाय नरेन्द्राय, तामभी काममूर्तये । अदर्शयन् वनाम्भोधिलब्धां श्रियमिव स्त्रियम् ॥ २८८ ॥
एतां सुरनदीसेवाफलमाकलयन् नृपः । आदाय कुन्ददायाददशनामविशत् पुरीम् ॥ २८९ ॥
सपत्नीं रत्नगर्भाया, रत्नगर्भितभूषणाम् । पुण्यपण्यपरिक्रीतस्तां वितेने नरेश्वरः ॥ २९० ॥
अपरेद्युः पुमान् कश्चिदिदं पुरमरञ्जयत् । अनार्तं नर्तयन्नेकं, वानरं नरजित्वरम् ॥ २९१ ॥
अथ भूपाय केनापि, तदकथ्यत कौतुकम् । सोऽपि चाऽऽकारयाग्रके, तं नरं धृतवानरं ॥ २९२ ॥
तां प्रियां स्वर्वधूबद्धस्पर्धामर्धासनस्थिताम् । कुर्वन्नुर्वीपतिर्भेजे, सम्मदैकास्पदं सदः ॥ २९३ ॥
अनीनृतत् ततः सोऽपि, नरस्तं वानरं पुरः । तूर्याणि वादयन् दिक्षु, जिघृक्षुर्जनमानसम् ॥ २९४ ॥
न वानरो नरीनर्ति, ताडितोऽप्यमुना पुनः । नृपप्रियामुखाम्भोजन्यस्तदृष्टिस्तु रोदिति ॥ २९५ ॥
विलक्षे भिक्षुकेऽयास्मिन्, सा राज्ञी वानरं जगौ । अये ! मया निषिद्धस्त्वं, तदा किमकृत्यास्तया ? ॥ २९६ ॥
कृतक्षोभेण लोभेन, स्तम्भितोऽसीदृशीं दशाम् । हृताखिलकलाशोभोऽतिलोभो हि न शोभनः ॥ २९७ ॥

१ °द्वारे, धि° बता० ॥ २ °र्व्यापुत्य तत्रै° पता० ॥ ३ °धीनार° संता० ॥ ४ °ना ततः । नृप° संता० ॥

बोधयित्वा तदात्मानं, मानं वानर ! मा कुरु । यो यथा वर्तते कालस्तं तथैवानुवर्तय ॥ २९८ ॥
इति प्रबोधिनो देव्या, नृत्यमत्यद्भुतं तदा । निर्व्याजं रञ्जयामास, वानरः स नरेश्वरम् ॥ २९९ ॥
कृतार्थीकृत्य पृथ्वीशस्तं वानरवरं नरम् । किमेतदिति तां राज्ञीं, पप्रच्छ सपरिच्छदः ॥ ३०० ॥
विस्मितेनावनीशेन, पृष्टा स्पष्टमुवाच सा । स्वःसोपानतरङ्गाया, गङ्गायास्तीरकानने ॥ ३०१ ॥
किलाऽऽसीद् वानरद्वन्द्वमद्वैतप्रीतिमन्दिरम् । निर्दम्भस्मरसंरम्भरसप्रसरपेशलम् ॥ ३०२ ॥
तदन्यदा निदाघार्तौ, क्रीडारसवशंवदम् । सममेव समारूढं, तीरवानीरभूरुहम् ॥ ३०३ ॥
ततः शाखामृगः शाखां, मन्दमन्दोल्लयन्नयम् । दूरतो विनिपाताख्यं, प्राप कापेयतः फलम् ॥ ३०४ ॥
वानरोऽयं नरो भूतस्तीर्थस्यास्य प्रभावतः । प्रियामालोकयामास, हर्षोत्सुक्यस्पृशा दृशा ॥ ३०५ ॥
भैरवादिव वानीराद्, वानरी साऽपतत् ततः । नारीभूता पतीयन्ती, तमेव निजवल्लभम् ॥ ३०६ ॥
गता ननु मनुष्यत्वमथ साऽप्यहह ! क्षणात् । जातजातिस्मृतिरिव, स्मरन्ती कपिजन्म तत् ॥ ३०७ ॥
ततो रतिः स्मरेणेव, प्रीतेन प्रेयसाऽथ [redacted] । हर्षोत्कर्षादिहारण्ये, चिरं चिक्रीड संयुता ॥ ३०८ ॥
सुधाकृतसुधासाररससारतरैः फलैः । मुदा तदानीमेताभ्यां, हसिता द्युसदोऽपि ते ॥ ३०९ ॥
क्रीडैस्तया सहाऽन्येद्युस्तं वानीरमवाप्य सः । तामुवाच युवा चक्षुः, क्षिपन् प्रेमोन्मुखं मुखे ॥ ३१० ॥
असौ पशुतां वानीरो, नरतां प्रथते यथा । तथा मन्ये मनुष्याणां, देवभावं प्रदास्यति ॥ ३११ ॥
प्रिये ! तदेहि वानीरमेनमारुह्य लीलया । पुनर्भूतलपातेन, देवभावोऽनुभूयते ॥ ३१२ ॥
मनुष्यत्वेऽपि किं तुच्छभावयोर्विद्यते प्रिय ! ! । तेन वल्लभ ! लोभोऽयमतिमात्रो न युज्यते ॥ ३१३ ॥
वार्यमाणोऽपि वानीरान्, स वानरवरो नरः । झम्पासम्पातमाधाय, पुनर्वानरतां गतः ॥ ३१४ ॥
प्रेरितो दुःखपूरेण, नरत्वस्पृहयाऽथ सः । पुनः पपात वानीराद्, गतः पुरुषतां न तु ॥ ३१५ ॥
मानुष्यभावमोक्षाय, चट्टन्यतिपट्टनि सः । तस्याश्चकार चक्रे तु, न तथा तदमूढया ॥ ३१६ ॥
साऽहं तस्य प्रिया प्राप्ता, वसन्ती निर्जने वने । त्वत्पत्तिभिः सरिर्तीरे, कृतैर्मत्तुष्यतन्तुभिः ॥ ३१७ ॥
अरण्यामटताऽनेन, पतिः प्राप्तः स एष मे । दक्षेण शिक्षितो नृत्यं, मां वीक्ष्य विकलोऽभवत् ॥ ३१८ ॥
तन् प्राणेश ! मया सोऽयं, निर्बुद्धिर्बोधितोऽधुना । ततो मयि विसस्मार, प्रेमापस्मारमात्मनः ॥ ३१९ ॥
इत्याकर्ण्य कृताश्चर्यौ, रूपेश्वर्यौ [redacted] नृपतिः । लोमानिशयमेतस्य, दूषयामास मांसलम् ॥ ३२० ॥

तत् पुण्यसम्भवान् भोगान्, भुक्त्वा कातुन् परं पदम् ।
नाथ ! त्वमुभयभ्रष्टो, हास्यः स इव मास्म भूः ॥ ३२१ ॥

अथ स्म वाचमाचष्टे, जम्बूम्नां प्रेयसी प्रति । न स्वां त्रिनिमारस्य, यदयोऽहं पुण्यमारयत् ॥ ३२२ ॥

पुण्यसाराख्यानकम्

पुरं भोगपुरं भोगशालिनारीमनोहरम् । अस्ति हर्म्यमदामोदराजिराजगृहाङ्गणम् ॥ ३२३ ॥
श्रेष्ठी धनावरो नाम, तत्राभूज्जनप्रियः । विभाव्य वैभवं यस्य, धनदोऽप्यधनायते ॥ ३२४ ॥
प्रिया गुणवती तस्य, यशो श्रीः श्रीपतेरिव । मीनकेतुः स मीनत्वं, यल्लावण्योदधौ दधौ ॥ ३२५ ॥
देवोपयाचितशतैः, पूर्णपूर्वप्रार्थितैः । कनकमोदसन्दर्भमथ गर्भं बभार सा ॥ ३२६ ॥

१ तथा प्रतिपत्तेय अं०० ॥

गृहं कलाकलापस्य, निष्पुण्यानां शिरोमणिः । तनयस्तव भावीति, तां कोऽपि ब्राह्मणोऽवदत् ॥ ३२७ ॥
अथासौ वासरैः पूर्णैः, पुण्यसाराभिधं सुतम् । असूत नूतनं चूतमिव काननमेदिनी ॥ ३२८ ॥
कलाचार्यकदम्बेभ्यः, स पपौ सकलाः कलाः । मुखेभ्यः सरितां श्रीमानपः पतिरपामिव ॥ ३२९ ॥
नन्दनीं बन्धुदत्तस्य, नाम्ना बन्धुमतीमसौ । धनावहेन सप्रीतिप्रवाहेण विवाहितः ॥ ३३० ॥
कदाचित् त्रिदिवं याते, ताते कृतमृतक्रियः । समुद्धुरतरस्कन्धो, गृहभारं बभार सः ॥ ३३१ ॥
अभाग्यैर्वैभवं तस्य, क्षीणं तच्चिरसञ्चितम् । सलिलं पल्वलस्येव, चण्डरोचिर्मरीचिभिः ॥ ३३२ ॥
अथासौ वैभवभ्रंशविगलत्पौरगौरवः । समारुरोह बोहित्थं, सुस्थितश्रेष्ठिना समम् ॥ ३३३ ॥
लङ्घयन् लहरीः पोतो, हरीनिव महाभटः । तीर्त्वा युद्धमिवाम्भोधिं, परं पारमवातरत् ॥ ३३४ ॥
आकारितं पताकाभिरिव सम्मुखमागतम् । रत्नद्वीपमथ प्राप्तः, पोतः पवनवेगतः ॥ ३३५ ॥
अन्तर्जलधि चाविश्य, दर्शितस्फारगौरवैः । नागरैस्त्याजितः कामं, पोतस्तरलतां तदा ॥ ३३६ ॥
उत्तीर्य धैर्यमालम्ब्य, पोतात् प्राणभयादिव । अहंपूर्विकया लोकः, प्रपेदे द्वीपमेदिनीम् ॥ ३३७ ॥
पुण्यसारस्तदा रत्नद्वीपे रत्नमहीतलम् । नित्यं खनत्यनिर्विण्णः, स्वदारिद्र्यमिवोन्नतम् ॥ ३३८ ॥
निष्पुण्यः पुण्यसारोऽसावसाराणि कथञ्चन । रत्नान्यवाप नो चिन्तामणिं तु चिरचिन्तितम् ॥ ३३९ ॥
अहं समं समेष्यामि, नासम्पूर्णमनोरथः । इत्थं स कथयामास, गन्तुकामोऽथ सुस्थिते ॥ ३४० ॥
समं तमसमायान्तमपि वित्तप्रदानतः । कृत्वा समुदितं तीर्णः, पोतेनार्णःपतिं वणिक् ॥ ३४१ ॥
स तथैव ततो रत्नखानिं खनति नित्यशः । शतशो वार्यमाणोऽपि, तदधिष्ठातृदैवतैः ॥ ३४२ ॥
अपरेद्युः खनन्नेष, दारिद्र्यध्वान्तदीपकम् । चिन्तामणिं पुरोऽपश्यद्, दुरापं किंनु निश्चितैः ? ॥ ३४३ ॥
असावथ नमस्कृत्य, चिन्तामणिमयाचत । स्वर्णलक्षमपश्यच्च, तत् तदैव गृहान्तरे ॥ ३४४ ॥
स्वर्णं रत्नं च तत् प्राप्य, तीरे नीरेशितुः स्थितः । नरस्य भग्नपोतस्य, संज्ञापदमुदञ्चयन् ॥ ३४५ ॥
नौवित्तधनदेवस्य, गन्तुर्भोगपुरं प्रति । आरुरोह स बोहित्थे, नीतस्तत्प्रेषितैर्नरैः ॥ ३४६ ॥
पोते तद्विदितं हेम्नामारोपयदयं चयम् । तेषामकथयच्चिन्तामणिं न तु रहस्यवत् ॥ ३४७ ॥
एकदाऽसौ त्रियामायां, यामयुग्मे समुत्थितः । प्रीतो विधुं विभावर्या, विभावर्ये न्यभालयत् ॥ ३४८ ॥

एताः श्वेतांशुभासः किं ?, किं ताश्चिन्तामणित्विषः ? ।
भान्ति भ्रान्तिभिदः सोऽथ, चेतस्येतदचिन्तयत् ॥ ३४९ ॥

अथ भ्रान्तिभिदे मूढः, कटीपटकुटीपुटात् । चकर्ष हर्षसम्पूर्णः, पूर्णेन्दुस्पर्धिनं मणिम् ॥ ३५० ॥
पश्यन्नसौ निशारत्नं, चिन्तारत्नं च तन्मुहुः । युतजातयुतद्वन्द्वनिमालिश्रीनिभो बभौ ॥ ३५१ ॥
पपात वातकम्पेन, प्रमोद इव पिण्डितः । मणिस्तस्य कराद्ब्धौ, रविरस्तगिरेरिव ॥ ३५२ ॥
स्थाप्यतां स्थाप्यतां पोतो, मुषितोऽस्म्यहमब्धिना । इत्थं कलकलैः पूर्णं, तेने तेनेदमम्बरम् ॥ ३५३ ॥
धनदेवस्ततः पोतं, मरुद्गतिमतिष्ठिपत् । कुतस्त्वमाकुलतमस्तमपृच्छदतुच्छधीः ॥ ३५४ ॥
प्रभाजितनभोरत्नं, चिन्तारत्नं ममापतत् । तदुद्धारय पाथोधेरस्मादस्माँश्च दुःखतः ॥ ३५५ ॥
जीवितव्यं मयि स्वस्मिन्, कीर्तिरारोप्यतां त्वया । हर्षात् कर्षय रत्नं तमित्युवाच शुचैव सः ॥ ३५६ ॥

१ सह खंता० ॥ २ 'सह समे' खंता० ॥ ३ 'त्वा प्रमुदि' खंता० पाता० ॥ ४ किं तुनि' खंता० ॥ ५ गन्तुं भोग° खंता० ॥ ६ 'कुटीपटा' खंता० पाता० ॥

यत्र लोकचमत्कारि, भवताऽकारि शब्दितम् । तदत्याजि पयो दूरे, वायुपूरेद्धपोततः ॥ ३५७ ॥
उत्तीर्यं तन्मनः खेदान्नेदानीं लभ्यते मणिः । नौविचेनेति नीतिज्ञो, बोधितो मौनमाप सः ॥ ३५८ ॥
तद्वदत्र भवाम्भोधौ, रत्नं मानुषजन्म यत् । सुधर्मस्वामिपोतेऽपि, लब्धे किं हारयामि तत् ! ॥ ३५९ ॥
पद्मसेनाऽथ निश्छद्मसेना कन्दर्पभूभुजः । श्रीजम्बूस्वामिनं प्राह, मनोत्साहधुरन्धरम् ॥ ३६० ॥
मा भूस्त्वमुभयभ्रष्टस्तौ राज्ञी-जम्बुकौ यथा । तयोः शृणु कथामेतामस्मिन्नेव पुरे पुरा ॥ ३६१ ॥

## राज्ञी-जम्बुकयोराख्यानकम्

धनेन धनदाकारः, स्वर्णकारशिरोमणिः । देवदत्त इति ख्यातिपात्रं धात्रीतलेऽभवत् ॥ ३६२ ॥
तस्याभूद् देवदिन्नाख्यः, सूनुर्विष्णोरिव स्मरः । कामभूमीपतेर्दुर्गं, दुर्गिलाऽस्य प्रियाऽभवत् ॥ ३६३ ॥
एकदा सा स्वयं नद्यास्तीरे नीरेच्छया ययौ । वक्षोजतुल्यताप्रीत्या, कुम्भौ मूर्धनि बिभ्रती ॥ ३६४ ॥
घटौ तटे सरिन्त्याः सा, मुक्त्वा मज्जनकाङ्क्षया । विवेश पयसः क्रोडं, निर्व्रीडक्रीडया रयात् ॥ ३६५ ॥
सहेलं तत्र खेलन्तीं, महिलां महिलां मदात् । व्यालोकयद् युवा कोऽपि, कन्दर्पज्वरजर्जरः ॥ ३६६ ॥
तरुणस्तां प्रति प्राह, स साहसनिधिस्ततः । तव पृच्छन्ति सुस्नातं, तरवस्तन्वि ! नन्विमे ॥ ३६७ ॥
सापि तन्मनःसम्भ्रमभ्यधायि तदा मुदा । एभ्यः स्वस्ति तरुभ्योऽस्तु, स्पृहा पूर्णाऽस्तु पृच्छते ॥ ३६८ ॥
मदनस्तद्वनेनामुं, वचसा जितपत्रिणा । जघान हृदये तूर्णं, घूर्णमानशिरोऽम्बुजम् ॥ ३६९ ॥
तद्वचःप्लावितर्पीयूषैः, सिक्तेऽस्य वपुषि क्षणात् । श्यामो रराज रोमाञ्चः, शृङ्गाराङ्कुरकोटिवत् ॥ ३७० ॥
बालान् फलार्थिनस्तीरसहकारतरोस्तले । कृत्वा फलभरैः प्रीतानपृच्छत् केयमित्यसौ ॥ ३७१ ॥
नाम्ना धाम्ना च तां मत्वा, शिशुभ्यः स वहन् मुदम् । कृतार्थमायमात्मानं, मेने मन्मथसन्निभः ॥ ३७२ ॥
स्नात्वा साऽपि सरित्तीरे, स्थिता सार्कं सखीजनैः । अलक्ष्यिताप्रसंलग्नस्वप्नभानिद्रुतांशुका ॥ ३७३ ॥
प्रती कटाक्षनाराचैरमुं भ्रूचापचापलात् । चचालाथ मनःस्मेरमदना सदनाय सा ॥ ३७४ ॥
चक्षुष्पथमथ त्यक्त्वा, गतायां तत्र तापवान् । तदङ्गसङ्गसुभगे, तत्राम्भसि ममज्ज सः ॥ ३७५ ॥
उपचारैस्ततः स्फारैः, कामी कामपि तापसीम् । अयमाराधयामास, कुलटाकुलदेवताम् ॥ ३७६ ॥
तापसी तापशीर्णाङ्गमनङ्गाहतमाह तम् । प्रीता क्रीताऽस्मि दानेन, किङ्करेव करोमि किम् ! ॥ ३७७ ॥
युवाऽप्युवाच तां मातर् !, देवदिन्नस्य वल्लभाम् । देवदत्तस्नुषां नाम्ना, दुर्गिलां मम मेलय ॥ ३७८ ॥
प्रार्थिता युवती केलिलीला कल्लोलिनीजले । मम भ्रूभङ्गभङ्गीभिः, सङ्गमाङ्गीचकार सा ॥ ३७९ ॥
तद्गृहीत्वा सा भैक्ष्यच्छद्मना गजगामिनी । जगाद दुर्गिलां व्यग्रां, स्थालीक्षालनकर्मणा ॥ ३८० ॥
तथा युवनिया तादृग्, वदन्ती तापसी तनः । निर्भर्त्स्य पृष्ठे हस्तेन, दत्ता स्थालीमषीजुषा ॥ ३८१ ॥
इत्यरक्षाविनाशावरपापाऽथ तापसी । तदेतत् कथयामास, तस्यावामभ्रुपेयुषी ॥ ३८२ ॥
पौरस्य दशः स तं दस्रं, श्यामं पयाङ्कुटीपुनम् । स्वं कृष्णपक्षनीरात्री, निर्निमित्तममन्यत ॥ ३८३ ॥
स पयोधुनरपेत्यु, विरचिन् पथमीनियो । तपस्विनी पुनः प्रैषीद्, भक्तिभिर्दुर्गिलां प्रति ॥ ३८४ ॥
अविल्ष्टा च मां भिक्षादम्भसंरम्भसंभृता । देवदत्तगृहं गत्वा, पुनस्तामाह साहसात् ॥ ३८५ ॥

१ 'लागं न' क॰ ॥ २ मा भूत्तुभयथा घातो, दुर्गिलापद् यथानरि । तथा शृणु सं॰ ॥ ३ कदापि सा सं॰ ॥ ४ 'टीपूनम्' सं॰ क॰ ॥ ५ सा दृष्टा सं॰ ॥

उच्चैः प्रपञ्चिताटोपा, सकोपा साऽपि तापसीम् । निर्भर्त्स्य गृहपाश्चात्यद्वारेण निरसारयत् ॥ ३८६ ॥
व्रीडा-पीडामराभुग्नकन्धराबन्धबन्धुरा । अथाकथयदस्मै सा, रुदती सुदती कथाम् ॥ ३८७ ॥
तदुक्तपश्चिमद्वारनिष्कासकथया ततः । अयमाहूतमात्मानं, मेने पश्चिमवर्त्मना ॥ ३८८ ॥
निष्पन्नमात्मनः कार्यं, मत्वा स प्राह तापसीम् । वाच्या न कापि पापिष्ठा, मातः! साऽतः परं त्वया ॥ ३८९ ॥
इमां च शान्तसन्तापां, दत्तप्रस्तुतवस्तुतः । चकार कारणं सिद्धेः, स्मरस्मरणदुर्मदः ॥ ३९० ॥
अथ मन्मथदीपेन, प्रकाशितपथो निशि । स्मरार्तो देवदत्तस्य, तस्य धाम जगाम सः ॥ ३९१ ॥
पाश्चात्यवर्त्मना कामविवशः प्रविशन्नसौ । ददर्श दुर्गिलामग्रे, साऽपि तं स्निग्धया दृशा ॥ ३९२ ॥
समाप्य गृहकृत्यानि, पत्यौ निद्रावशंवदे । ययावुपपतिं हृष्टा, सा गृहोपवनावनौ ॥ ३९३ ॥
अनारतरतश्रान्ता, सहैं तेन हताशया । सा स्वापमाप तत्रैव, समं भर्त्रेव निर्भरम् ॥ ३९४ ॥
तदानीं कायचिन्तार्थमुत्थायोपवनं गतः । देवदत्तः स्नुषां तत्र, तदवस्थां व्यलोकयत् ॥ ३९५ ॥
विपश्चिन्निश्चयायाथ, सुतवासगृहं गतः । एकाकिनं सुतं वीक्ष्य, प्राप्तस्तत्र वने पुनः ॥ ३९६ ॥
रुषा स्नुषापदाम्भोजादभिज्ञानकृते कृती । मन्दं मन्दं स्वहस्तेन, मञ्जीरमुदतीतरत् ॥ ३९७ ॥
क्रमादुत्तार्यमाणे सा, नूपुरे जातजागरा । गुरुमालोकयामास, यान्तं कलितनूपुरम् ॥ ३९८ ॥
ससम्भ्रममथोत्थाय, कृपणा प्राणवल्लभम् । नूपुरोत्तारवृत्तान्तं, सनिर्वेदं न्यवेदयत् ॥ ३९९ ॥
क्रियमाणे प्रिय! प्रातर्दिव्ये साहायकं त्वया । किञ्चिन्मम विधातव्यं, सेत्युक्त्वा विससर्ज तम् ॥ ४०० ॥
वहन्नत्यद्भुतं भीतिभारं सोऽपि युवा जवात् । पथा यथागतेनाधोवदनः सदनं ययौ ॥ ४०१ ॥
दुर्गिला तु समालिङ्ग्य, निद्रारसवशीकृतम् । पतिं जागरयामास, मांसलस्नेहनाटिका ॥ ४०२ ॥
महेलया तया सार्धं, वर्धितोद्दामहेलया । तदा विद्राणनिद्रोऽयं, चिक्रीड क्रीडमुत्कया ॥ ४०३ ॥
तत्राथोपवने नीत्वा, तं रतिश्रान्तिशान्तये । निद्रामुद्रितनेत्राब्जं, व्रीडितेव जगाद सा ॥ ४०४ ॥
पादादुत्तार्य मञ्जीरं, मम पश्य पिता तव । अयं प्रयाति निर्लज्जः, कुलाचारः क एष वः? ॥ ४०५ ॥
गृहोपपतिना सुप्ता, गुप्ताऽसौ विपिनान्तरे । ध्यात्वेति त्वत्पिता मन्ये, चकर्ष मम नूपुरम् ॥ ४०६ ॥
*तत् साक्षादेव भाषस्व, पितरं हितरञ्जक! । कलङ्कं मत्कुले प्रातरयमानेष्यतेऽन्यथा* ॥ ४०७ ॥
निशम्येति गिरं देवदिन्नः कान्तामवोचत । शीलैकसज्जे! लज्जेऽहमिदानीमेव तं ब्रुवन् ॥ ४०८ ॥
वक्ष्ये प्रातस्त्विति स्पष्टसन्धाकर्तरि भर्तरि । असौ सुष्वाप निस्तापा, पटुः कपटनाटके ॥ ४०९ ॥
देवदिन्नोऽथ कोपेन, पावकेनेव सज्ज्वलन् । प्रिययोत्थापितः प्रातः, प्रयातः पितरं प्रति ॥ ४१० ॥
मयैव सह सुप्ताया, वध्वा नूपुरं हृतम् । भ्रान्तेन भवता यत् तदर्प्यतामित्यवोचत ॥ ४११ ॥
॥ युग्मम् ॥
सुतं तमिति वक्तारमाह स्वर्णकृदग्रणीः । त्वां वीक्ष्य सुप्तमत्रास्याः, पांशुलाया हृतं मया ॥ ४१२ ॥
अथेति श्वशुरेणोक्ते, दुर्गिला साऽऽह साहसात् । भुज्यते प्रविधाय स्वं, निष्कलङ्कं कुलं किल ॥ ४१३ ॥
अथो सुवर्णकारेण, कुटुम्बं मेलितं निजम् । स्वजना दुर्गिलायाश्च, समाहूताः समन्ततः ॥ ४१४ ॥
असत्यं हन्ति पादाधश्चारिणं यः क्षणाज्जनम् । यक्षस्य तस्य ते चैत्ये, जग्मुर्दुर्गिलया समम् ॥ ४१५ ॥

---

१ च सान्तःसन्ता° खंता० ॥ २ °हकर्माणि, पत्यौ खंता० ॥ ३ °द्यानेन पाता० ॥ ४ °निश्चिकाथाय पाता० ॥ ५ °यनं नी° वता० ॥

स्नात्वा पवित्रगात्रा सा, यावच्चैत्याय गच्छति। तावद् अहिलतादम्भाज्जारेणाऽऽलिङ्गिताऽग्रतः॥ ४१६ ॥
धिग्! धिग्! मा मा स्पृश त्वं मां, वदन्तीत्यथ दुर्गिला।
तस्माद् विमोचिता पार्श्ववर्तिभिः स्नपिता पुनः ॥ ४१७ ॥
अथ चैत्यान्तरे गत्वा, यक्षं सम्पूज्य च स्वयम्। सा मालकुड्मलीभूतपाणिपद्मा व्यजिज्ञपत्॥ ४१८ ॥
मुक्त्वा करग्रहीतारं, ग्रहिलं च नरो यदि। कोऽपि लग्नो मदङ्गे तद्, देव! कार्याऽस्मि भस्मसात्॥ ४१९ ॥
इत्युदीर्य तदा यक्षे, संशयारूढचेतसि। अधश्चरणयोरेषा, निःससार धियांनिधिः ॥ ४२० ॥
शुद्धा शुद्धेति याचस्तत्, तालास्फालनगर्भिताः। उल्लासिता जनशतैः, रुरुधुर्गगनाङ्गणम् ॥ ४२१ ॥
स्वयंदृष्टान्यपार्श्वस्थस्नुपासंशुद्धिचिन्तया। तदादि देवदत्तस्य, निद्रा नायादहर्निशम्॥ ४२२ ॥
दिनैः कतिपयैर्मत्वा, विनिद्रं तं पुराधिपः। निजस्यान्तःपुरस्यान्तश्चकार किल यामिकम् ॥ ४२३ ॥
सुप्तो जागर्ति वा सोऽयमित्युत्थाय मुहुर्मुहुः। राज्ञीमेकां स पश्यन्तीं, ज्ञात्वा सुप्तोऽथ कैतवात्॥ ४२४ ॥
सत्यसुप्तमिमं ज्ञात्वा, राज्ञी जालकनिर्गता। अधस्ताद्धस्तिना निन्ये, भूतलं तलवर्तिना ॥ ४२५ ॥
अथ हस्तिपकेनासौ, कुपितेन चिरागता। हस्तिशृङ्खलाघातेन, निजघ्ने जघने घनम् ॥ ४२६ ॥
जाग्रद्यामिकवृत्तान्तकथनेन प्रसेदुषा। तेन सा ध्वस्तकोपेन, समं चिक्रीड निर्भरम् ॥ ४२७ ॥
तूर्णं गवाक्षमारुह्य, स्वर्णकारोऽपि कौतुकी। सविसयस्तयोस्तानि, क्रीडितानि व्यलोकयत्॥ ४२८ ॥
सं हस्तिपकमालिङ्ग्य, प्रत्यूषसमयेऽथ सा। राज्ञी करिकरेणैव, प्रस्थिता प्रतिजालकम् ॥ ४२९ ॥
स्वस्थाने स्वर्णकारोऽपि, समागत्याऽऽशु सुप्तवान्। वासवेश्मनि सुष्वाप, साऽपि क्षितिपवल्लभा॥ ४३० ॥
हृदि दध्यावथ स्वर्णकारस्तच्चरितस्मितः। के वयं? यन्नरेन्द्राणामप्यसौ विप्लवप्लवः ॥ ४३१ ॥
इति निर्वृतिमासाद्य, सद्यो निद्रां प्रियामिव। भेजे चिरतरप्राप्तिगाढाश्लेषपरामसौ ॥ ४३२ ॥
अथाकथ्यत भूपाय, सुप्तः परिजनैरयम्। घुर्घुरघुर्घुरारावजितसूकरयूथपः ॥ ४३३ ॥
निद्रा तथा विनिद्रेण, तेनाद्य यदवाप्यत। तन्मन्ये कारणं किञ्चिदुत्थाप्यस्तदसौ नहि ॥ ४३४ ॥
इत्यादिष्टपरिवारस्तं सप्तमदिनोत्थितम्। रहस्याकार्य पप्रच्छ, क्ष्मापः स्वापस्य कारणम् ॥ ४३५ ॥
समग्रं चरितं तस्मिन्, निवेद्याय गते सति। राजा समजनि क्रोध-त्रपासन्तप्तमानसः ॥ ४३६ ॥
अथ कृत्वा किलिञ्जेन, कुञ्जरं राजकुञ्जरः। स्थित्वा रहसि राज्ञीः स्वाः, समाहूयेदमब्रवीत्॥ ४३७ ॥
दुःस्वप्नोऽद्य मया दृष्टस्तत् सत्यीकृत्य हन्यताम्। पर्यस्तवसनं हस्तिन्यस्मिन्नारुह्यतामिति ॥ ४३८ ॥
इत्यादिष्टा नरेन्द्रेण, सर्वाः शुद्धान्तयोषितः। उच्चैरद्विपमारुह्य, पूर्वाद्रिमिव तारकाः ॥ ४३९ ॥
सा तु दुष्टा बिभेमीति, भाषमाणा महीभुजा। हताऽभिमन्त्रितेनेव, पद्मेन पतिता भुवि ॥ ४४० ॥
अथास्या जघनं राजा, शृङ्खलाकिणकश्मलम्। ददर्श शैवलालीढजाह्नवीपुलिनोपमम् ॥ ४४१ ॥
अथाऽऽह तां हतां राजा, कोपाटोपारुणेक्षणः। अन्यासामपि भीरूणां, भीरुतां प्रतिपादयन्॥ ४४२ ॥
यासि द्विपकराञ्जारं, बिभेषि तु कटद्विपात्। मोदसे शृङ्खलापातैः, पद्मपातैस्तु मूर्च्छसि ॥ ४४३ ॥
इति ब्रुवन् भ्रुवं भाले, समारोप्यातिकोपनः। धृत्वा केशेषु लोकेशः, कृष्टवान् विष्टपोऽथ ताम्॥ ४४४ ॥

---

१ 'पैशांग्या' संघा० ॥ २ किं मां पश्यति राज्ञीति, ध्यात्वा सुप्तः स कै' पत्ता० ॥ ३ सुप्तः स कै' संघा० ॥ ४ 'समग्रं शा' संघा० ॥ ५ 'स्तिमदृशी' पाता० ॥ ६ 'स्पर्धरात' संघा० ॥ ७ 'रया कलि' पत्ता० ॥ ८ 'हतां ततः' संघा० ॥ ९ तारिकाः संघा० ॥

अथ हस्तिपकं हस्तिराजं हस्तिगर्तिं च ताम् । हन्तुं नूतनमारेण, नृपः किञ्चिदचिन्तयत् ॥ ४४५ ॥
ततः क्षितिपतिः साकं, साकम्पैः स्वजनैर्भयात् । वैभारपर्वतं यातो, निन्ये तत्र च तत् त्रयम् ॥ ४४६ ॥
अथाऽऽदिशन्नृपो हस्तिपकं साकं स्त्रियाऽनया । आरुह्यारोपय रयाद्, द्विपं मूर्ध्नि गिरेरिति ॥ ४४७ ॥
समभृत्यु-समस्थानगतिहर्षादुभाविभम् । अधिरूढावथाम्भोदं, रोहिणी-शशिनाविव ॥ ४४८ ॥
हस्ती हस्तिपकेनाथ, प्रेरितो गिरिमूर्धनि । आरुरोह पयोवाह, इव मन्देन वायुना ॥ ४४९ ॥
अथाऽऽरूढं गिरेर्मूर्ध्नि, मेण्ठमाज्ञापयन्नृपः । पातयैनं द्विपं शैलात्, कैलासगिरिगौरवात् ॥ ४५० ॥
इत्युक्ते क्षितिनाथेन, निषादिकृतसंज्ञया । एकोऽम्बरे निरालम्बश्चरणः करिणा कृतः ॥ ४५१ ॥
पातयेति नृपादेशान्मेण्ठनुन्नः पुनः करी । पदं द्वितीयमुद्दध्रे, समारोढुमिवाम्बरम् ॥ ४५२ ॥
हाहाकारमथाऽऽधाय, पूर्लोकः शोकपूरितः । ईदृक्षं रक्ष रक्षेभमिति भूपं व्यजिज्ञपत् ॥ ४५३ ॥
रोषदोषखनिः क्ष्मापस्तमुपेक्ष्य पुरीजनम् । उवाच पातयेत्युच्चैस्तदा हस्तिपकं पुनः ॥ ४५४ ॥
तृतीयं मेण्ठनुन्नोऽथ, पादमुत्पाटयन् करी । गिरावेकपदस्तस्थौ, तपस्यन्निव मुक्तये ॥ ४५५ ॥
लोकैरथ भृशं हाहाकारव्याहारवीचिभिः । क्षपितः क्षितिपालस्य, कोपाग्निः करिणं प्रति ॥ ४५६ ॥
अथावनीधवेनायं, निषादी भाषितस्तदा । कथञ्चिदुत्तरत्येष, करी जीवन् गिरेरिति ॥ ४५७ ॥
आवां मुञ्चसि जीवन्तौ, यद्युत्तरति तत् करी । इति विज्ञपयामास, मेण्ठः पृथ्वीपतिं प्रति ॥ ४५८ ॥
अभयं ते वयं दद्मः, पश्चासन्न द्विपं मम । उत्तारय रयादेतद्, तदाऽऽदिशदमुं नृपः ॥ ४५९ ॥
इत्यादेशान्नरेशस्य, मुदितेन निषादिना । उत्तारितः करी शैलादात्मा च यममन्दिरात् ॥ ४६० ॥
अथ चक्षुष्पथं भर्तुर्विहाय सहितस्तया । चचाल सोऽयमुत्तालगतिर्देशान्तरं प्रति ॥ ४६१ ॥
प्रान्ते ग्रामस्य कस्यापि, निशि देवकुलान्तरे । तौ लीनौ नलिनक्रोडे, तस्थतुर्भ्रमराविव ॥ ४६२ ॥
समयेऽथ निशीथस्य, ग्रामतः कोऽपि तस्करः । सलोप्त्रः प्राविशच्चैत्यं, तलारक्षैरनुद्रुतः ॥ ४६३ ॥
उदिते विदितो भानौ, ग्राह्योऽयमिति निश्चयात् ।
ऊर्द्ध्वास्ते परयश्चैत्ये, दध्युर्नीरन्ध्रवप्रताम् ॥ ४६४ ॥
सोऽपि चौरश्चरन्नन्तश्चैत्यमप्रस्फुरत्करः । लुठितस्याथ मेण्ठस्य, शरीरं पाणिनाऽस्पृशत् ॥ ४६५ ॥
निद्राविद्राणचैतन्ये, तस्मिन्नथ निषादिनि । चौरः सञ्चारयाञ्चक्रे, करं कमलकोमलम् ॥ ४६६ ॥
कथञ्चिदप्यथो राज्ञीकुचभूधरमूर्धनि । प्राणरक्षणदुर्गेऽस्य, तस्करस्य करो ययौ ॥ ४६७ ॥
तत्कोमलकरस्पर्शमनुभूय नृपाङ्गना । मनोभवार्ता तं वार्तामपृच्छत् को भवानिति ॥ ४६८ ॥
तेनोक्तमस्मि चौरोऽहमपिरोहन्मृतिर्यतः । एतच्चैत्यं चतुर्दिक्षु, मत्कृते वेष्टितं भटैः ॥ ४६९ ॥
भयवन्तं ब्रुवन्तं तमित्याह क्षितिपाङ्गना । मा भैषीर्भवतः प्राणरक्षां दक्ष ! करिष्यते ॥ ४७० ॥
हृत्वा त्वया यदानीतं, तदस्योच्छीर्षके त्यज । तदेहि दूरतो यावत्तावदावां स्मितसरौ ॥ ४७१ ॥
निशम्य सम्यगायातमृत्युशान्तिमहौषधम् । एतस्या वचनं चौरश्चकार स यथोदितम् ॥ ४७२ ॥
क्षणेन साऽपि गौराङ्गी, चौराङ्गीकरणोद्यता । हस्त्यारोहममुञ्चत् तं, चित्तं को वेत्ति योषिताम् ! ॥ ४७३ ॥
अथोदिते द्युतिपतौ, ध्वान्तद्रुमदवानले । विविशुर्विवशाः कोपाच्चैत्यं चौरार्थिनो भटाः ॥ ४७४ ॥
लोप्त्रवन्तं तदाऽऽरक्षाः, क्रोधाद् दधुर्निषादिनम् । तन्वन्तश्चुमुलारावमुल्लसन्तस्तदा मुदा ॥ ४७५ ॥

सेयं मुग्धा मम वधूश्चौरेण जगृहे पुनः । नाहं चौर इदं जल्पन्, ॥ ततश्चक्षेपे भटैः ॥ ४७६ ॥
समं मलिम्लुचेनाथ, नाथभूतेन पांसुला । चचाल चैत्यतस्तस्मात्, कलङ्कैकनिकेतनम् ॥ ४७७ ॥
प्रस्थिताभ्यामथैताभ्यां, ददृशे पुरतः सरित् । अम्भःकुम्भिकरोदश्चदम्बुचुम्बितद्रुमा ॥ ४७८ ॥
चौरोऽथ चिन्तयाञ्चक्रे, न या निजविभोरभूत् । भविष्यति कुतः सा मे, कामेषुविवशीकृता ? ॥ ४७९ ॥
अस्याः सर्वस्वमादाय, मायया तद् व्रजाम्यहम् । मनोरथं मदीयं हि, नदीयं पूरयिष्यति ॥ ४८० ॥
इति निश्चित्य तामूचे, चौरश्चपललोचनाम् । दुस्तरा सिन्धुरेषाऽस्ति, गतिनिर्जितसिन्धुरे ! ॥ ४८१ ॥
एककालं न भवतीं, वसना-ऽऽभरणादि च । उत्तारयितुमीशोऽहं, तत् पूर्वं सर्वमर्पय ॥ ४८२ ॥
ततस्तीरे विमुच्यैतत्, सर्वं सर्वाङ्गसुन्दरि ! । भवतीं पुनरानेतुमहमेष्यामि सत्वरम् ॥ ४८३ ॥

साऽपि तद्वचसा प्रीता, वसना-ऽऽभरणादिकम् ।
तस्यार्पयित्वा चौरस्य, शरस्तम्बान्तरे स्थिता ॥ ४८४ ॥

स्वभावनिस्त्रपां दौश्चनिलपस्तां विलोकयन् । दायादवत् तदादाय, स विवेशाऽऽपगापयः ॥ ४८५ ॥
स्वपतित्यागिनीं न त्वां, स्वप्नेऽपि स्पृहयाम्यहम् । तामित्युक्त्वा नदीं तीर्त्वा, तस्करः स तिरोदधे ॥ ४८६ ॥
साऽपि किं करवाणीति, वाणिनी मूढमानसा । एकं जम्बुकमद्राक्षीन्मांसखण्डयुजं मुखे ॥ ४८७ ॥
जिघृक्षुः स तिमिं सिन्धोरम्बुकच्छेऽथ जम्बुकः । मांसखण्डं पुरो मुक्त्वाऽधावद् यावदयं रयात् ॥ ४८८ ॥

तावदम्बुनिमग्नेऽस्मिन्, मत्स्ये विवलितस्तदा ।
चक्रन्द जम्बुको दुःखी, शकुन्त्या पिशिते हृते ॥ ४८९ ॥ युग्मम् ॥

तं तथास्थितमालोक्य, गतदुःखेव साऽहसत् । प्रौढान्यपि हि दुःखानि, विस्मर्यन्तेऽतिकौतुकैः ॥ ४९० ॥
हसन्तीमसतीमेतां, व्यक्तमूचेऽथ जम्बुकः । मां किं मांस-तिमिभ्रष्टं, नग्ने ! हससि निस्त्रपे ! ? ॥ ४९१ ॥
भ्रष्टं जाराच्च चौराच्च, किं नात्मानं हसस्यहो ! ? । मूढो ददौ ज्वलद् पश्येन्न पुनः पादयोरधः ॥ ४९२ ॥
जल्पाके जम्बुके तस्मिन्निति वृत्तं नृभाषया । चिन्तयामास सा यावदाविष्कृतचमत्कृतिः ॥ ४९३ ॥
स दिव्यपुरुषो भूत्वा, भूरिभूषणभूषितः । जगाद जम्बुको वाचं, भूयस्तां तावदुच्चकैः ॥ ४९४ ॥
॥ युग्मम् ॥

निजं जानीहि मां पूर्णहिमांशुमुखि ! कामुकम् । अहं स हंसगमने !, शिखारत्नं निषादिनाम् ॥ ४९५ ॥
त्वामादाय गते चौरे, चौरबुद्ध्याऽथ रक्षकैः । अहं दुःखलतामूलशूलायामधिरोपितः ॥ ४९६ ॥
जिनदासं तदाऽऽसन्नचरं वीक्ष्य वणिग्वरम् । आर्तोऽयाचं पयः पातुं, पयोदमिव चातकः ॥ ४९७ ॥
नमोऽर्हद्भ्य इति न्यस्य, मन्त्रं मयि तदाऽऽतुरे । पानीयाय जगामाऽयमन्तर्मार्गं वणिग्वरः ॥ ४९८ ॥
अथ शूलास्थितस्तेन, मन्त्रेण मुखरस्तदा । जातोऽहं केतकीपत्रप्राप्तजाग्रद्द्विरेफवत् ॥ ४९९ ॥
आरक्षानुज्ञया श्रेष्ठी, पयः पाययितुं मया । दृष्टो हृष्टेन मातेव, वेगादागामुकस्तदा ॥ ५०० ॥
अर्पितेनापि तृप्तोऽहं, पयसा दृक्पथस्पृशा । स्मरन्नतितरां मन्त्रं, प्राणैर्मुक्तोऽस्मि तत्क्षणात् ॥ ५०१ ॥

तन्मन्त्रध्यानमाहात्म्याद्, भूत्वाऽहं ज्ञानवान् सुरः ।
तव मोहव्यपोहाय, व्यधां फेरुण्डताण्डवम् ॥ ५०२ ॥

जैनं भज ततो धर्ममम्मुं त्वमपि भामिनि ! । नैव स्वर्गा-ऽपवर्गश्रीर्यत्प्रसादाद् दुरासदा ॥ ५०३ ॥

---

१ °देऽमुना । ना° खंता० ॥

चन्द्रचारूणि चीराणि, परिधाप्य प्रबोध्य ताम् । अथायमानयत् क्वापि, पत्तने व्रतिनीमठे ॥ ५०४ ॥
इत्यसौ बोधिता तेन, रविणेव सरोजिनी । दधौ हृदि तदा साधुधर्मं हंसमिवोज्ज्वलम् ॥ ५०५ ॥
तत् त्वं सा कम्बुकण्ठीव, स जम्बुक इवापि च । मास्म भूरुभयभ्रष्टो, मुक्त्यर्थं मुक्तवैभवः ॥ ५०६ ॥
अथ श्रीजम्बूरूचे तां, स्त्रीचेतांसि प्रबोधयन् । विद्युन्मालीव नैवाहं, मोहे मज्जामि कामिनि ! ॥५०७॥

## विद्युन्मालयाख्यानकम्

अस्ति सन्ततसञ्चारितारविश्रामभूमिका । नभः स्तम्बेरमस्तम्भो, वैताढ्य इति भूधरः ॥ ५०८ ॥
तस्यावनिस्तनस्येव, मूर्ध्नि काश्मीरपत्रवत् । पुरमस्ति मणिस्तोममयं गगनवल्लभम् ॥ ५०९ ॥
तत्र विद्याधरौ विद्युन्मालि-मेघरथाविति । वैताढ्यश्रीमुखस्यास्य, नगरस्य दृशाविव ॥ ५१० ॥
अथ साधयितुं विद्यां, मातङ्गीसंज्ञया श्रुताम् । मन्त्रयामासतुर्विद्याधरौ प्रीतिधुरन्धरौ ॥ ५११ ॥
चण्डालकन्यामुद्वाह्य, तद्गृहे विहितास्पदैः । विद्या वर्षावधि ब्रह्मचर्यादेषा तु साध्यते ॥ ५१२ ॥
भूखण्डमण्डने गत्वा, साधयावः क्वचित् पुरे । तदेतामिति निश्चित्य, तौ वसन्तपुरं गतौ ॥ ५१३ ॥
स्थित्वा चण्डालवेषेण, तत्र चण्डालपाटके । एतौ चण्डालमुख्यानां, चक्रतुः सेवनक्रियाम् ॥ ५१४ ॥
ततस्तैः सेवया प्रीतै, रतौ सम्भाषितौ मिथः । किमङ्गजौ ? कुतः प्राप्तौ ?, किमारम्भौ युवामिति ? ॥ ५१५ ॥
तावूचतुरिति म्लेच्छराजपुत्राविहागतौ । साकेतपुरवास्तव्यावावां पित्रा निराकृतौ ॥ ५१६ ॥
तदावाभ्यामिहागत्य, यूयमेव निषेविताः । विना सत्प्रभुसेवाभिः, क्व पूर्यन्ते मनोरथाः ? ॥ ५१७ ॥
इति श्रुत्वा तयोर्वाचं, तदा चण्डालशेखराः । ते बभूवुर्मुदाऽऽमोदमन्दिरं मेदुरप्रभाः ॥ ५१८ ॥
तदाऽऽनन्दमयैरेभिस्तावेतौ परिणायितौ । स्वाजन्याय स्वपुत्रीभ्यां, लताभ्यामिव भूरुहौ ॥ ५१९ ॥
ब्रह्मचर्येण रोचिष्णुरथ मेघरथः कृती । वसंस्तत्रैव वर्षेण, तां विद्यां वशमानयत् ॥ ५२० ॥
विद्युन्माली [redacted] चाण्डालीं, तामकामयताधमः । साऽपि गर्भं दधौ तस्य, स्थिरीकरणकार्मणम् ॥ ५२१ ॥
असिद्धमथ सिद्धस्तमाह मेघरथस्तदा । किमकारि त्वया मूढ !, मग्नोऽसि म्लेच्छवारिधौ ॥ ५२२ ॥
इत्याकर्ण्य त्रपानम्रो, विद्युन्माली जगाद तम् । एकवारं सदाचार ![3], क्षम्यतां विप्लवो मम ॥ ५२३ ॥
इदानीं साधयिष्यामि, विद्यां निर्जितमन्मथः । वाच्यः प्रीतिप्रकर्षेण, वर्षेणाहं त्वया पुनः ॥ ५२४ ॥
एवमस्तु गदित्वेति, स्फुरद्विद्यापदच्छदः । धीमान् पक्षीव वृक्षाग्रमारुरोह नभस्तलम् ॥ ५२५ ॥
समयान्ते समायातः, समया [redacted] पुनः कृती । बन्धुप्रेमगुणाकृष्टो, म्लेच्छं विद्याधरोऽपि सः ॥ ५२६ ॥
अग्रे तावदसौ विद्युन्माली बालं करे धरन् । पुनर्गर्भितचण्डालीशाली तेन विलोकितः ॥ ५२७ ॥
सोऽपि मेघरथं वीक्ष्य, त्रपयाऽभूदधोमुखः । रसातलप्रवेशाय, द्रष्टुं रन्ध्रमिवावनौ ॥ ५२८ ॥
उक्तो मेघरथेनाथ, बन्धो ! बन्धोऽयमेतया । कुतः शटितया रज्ज्वा, गजस्येवाभवत् तव ? ॥ ५२९ ॥
अथाधोमुख एवेदं, विद्युन्माली जगाद तम् ।
बन्धो ! विद्याऽमुनाऽब्देन, साध्या शोध्योऽस्म्यहं पुनः ॥ ५३० ॥

---

१ °दि सदा साधु° पाता० ॥ २ ततस्तौ सेवया प्रीतौ, रतौ वता० ॥ ३ °ङ्गतौ ! कुतः वता० ॥ ४ तेनाचलो° खंता० ॥

निशम्येति गतः सोऽपि, यावद् वर्षत्रयं पुनः । एहिरेयाहिरां चक्रे, मग्नो मोहे तु सोऽधमः ॥ ५३१ ॥
दुःखदावाग्निदाहाय, नाहं मोहाटवीतरुः । तन्वि ! तद्वद् भविष्यामि, स्त्रीलताजालवेष्टितः ॥ ५३२ ॥
गिरं कनकसेनाऽथ, सुधामाधमवामिव । अभ्यधाद्धारिणीपुत्रं, प्रति प्रतिकृती रतेः ॥ ५३३ ॥
शास्त्रव्यापारपारीणो, धुरीणो बुद्धिशालिनाम् । एष्यस्यनुशयं नाथ !, त्वं शङ्खधमको यथा ॥ ५३४ ॥

## शङ्खधमकाख्यानकम्

शालिग्राम इति ग्रामः, ख्यातः क्ष्मातलभूषणम् । लोलश्रीकेलिशैलाभकणकूटोऽस्ति विस्तृतः ॥ ५३५ ॥
कौटुम्बिकस्य कस्यापि, तत्रैकः क्षेत्ररक्षकः । प्रेष्योऽजनि ध्वनत्कम्बुनादत्रासितभक्षकः ॥ ५३६ ॥
एकदाऽयमुपादाय, पाणौ शङ्खं निशामुखे । दूरे जगाम ग्रामस्य, क्षेत्ररक्षणदक्षिणः ॥ ५३७ ॥
निशीथसमये हृत्वा, कुतोऽप्यतिघनं धनम् । तत्क्षेत्रस्य समीपेन, चौराः केचित् तदाऽचलन् ॥ ५३८ ॥
तेन तत्रान्तरे क्षेत्रान्तरे मालाप्रवर्तिना । कम्बुरम्बुधरध्वानवाधऽवाद्यत हेलया ॥ ५३९ ॥
तदाकर्ण्य तदा कम्बुशब्दितं ते मलिम्लुचाः । त्यक्त्वाऽऽशु गोधनं नेशुः, प्राप्तारक्षकशङ्कया ॥ ५४० ॥
तत् तस्य गोधनप्राप्तिपुण्याकर्षणमन्त्रताम् । ततान कम्बुनिःस्वानगौरवं चौरबन्धकम् ॥ ५४१ ॥
विभातायां विभावर्यां, चर्यां कुर्वन् स गोधनम् । वीक्ष्य निःशेषमादाय, दातुं ग्रामाय चागमत् ॥ ५४२ ॥
अथ ग्रामस्य कामं सं, पूरयन् भूरिगोधनैः । दर्पैस्तदा ययौ दुःस्थं, ययौ धनदयक्षताम् ॥ ५४३ ॥
अन्यदाऽपि निशीथिन्या, निशीथे गोधनाशया । क्षेत्रमालाधिरूढोऽसौ, शङ्खं धमति धैर्यवान् ॥ ५४४ ॥
त एव तस्करास्तत्र, निशीथेऽन्येद्युराययुः । हृताद्भुतधना धैर्यजितकीनाशकिङ्कराः ॥ ५४५ ॥
दध्मौ शङ्खं क्षणेऽमुष्मिन्, सोऽपि क्षेत्रस्य रक्षकः । आह्वातुमिव दुर्बुद्धिर्दूरादापदमात्मनः ॥ ५४६ ॥
आकर्ण्य ते तदा कम्बोः, शब्दमब्दविजित्वरम् । किमेतदिति संरब्धाश्चौराश्चिरमचिन्तयन् ॥ ५४७ ॥
अत्रैव शङ्खशब्दोऽभूत्, पुराऽपि प्रापितज्वरः । भयादकस्मादस्माकमाकस्मिकविकस्वरः ॥ ५४८ ॥
नरः शङ्केऽस्ति केदाररक्षकः शङ्खवादकः । भ्रमिताः स्मः पुरा स्पष्टं, कष्टं तेन दुरात्मना ॥ ५४९ ॥
इति निश्चित्य ते चौराः, शङ्खस्वनमनूद्यताः । स शङ्खधमको यत्र, तत्र क्षेत्रान्तरे ययुः ॥ ५५० ॥
मुष्टिभिस्ताडयित्वा तं, भंक्त्वा शङ्खं च सक्रुधः । हृत्वा च तद्धनं मङ्क्षु, चौरास्ते जग्मुरुन्मुदः ॥ ५५१ ॥
प्रभूते सति वित्तेऽस्मिन्नधिकाधिकवाञ्छया । स इव त्वं विदग्धोऽपि, भव मा पदमापदाम् ॥ ५५२ ॥
अथ जम्बूः स तामाह, सतामाहतविप्लवः । स्यामहं किमु ? मूर्खत्वान्मुमूर्षुः स कपिर्यथा ॥ ५५३ ॥

## वानराख्यानकम्

अस्ति हस्तिकुटोत्पाते, रत्नै रेवाम्बुवाहितैः । रत्नाकरीकृताम्भोधिर्विन्ध्यो नाम धराधरः ॥ ५५४ ॥
अनेकमुनिमाहात्म्याददाहात्मकतां गतः । तद्वनान्तर्दैव इवाभवत् कोऽपि कपीश्वरः ॥ ५५५ ॥
उद्भूतैरुचिसम्भारास्तारा इव निशाकरः । कामं कामयते सर्वाः, स एकः कपिकामिनीः ॥ ५५६ ॥

---

१ सोऽपूरयद् भू° संता० ॥ २ °याऽतुच्छं, ययौ पाता० ॥ ३ °न्यां, नि° खता० ॥ ४ °पदः संता० पाता० ॥ ५ °अशेषमुनि° खता० ॥ ६ °याऽभूत् कोऽपि कपियूथपः इत्येवंरूपः पाठः संता० पाता० ॥ ७ °तभूरिसश्रीका° संता० ॥

कपिः कोऽप्यंसलंमन्यः, कदाचिन्मदनातुरः । वञ्चयित्वाऽधिपं रेमे, तत्प्रियाभिर्भयोज्झितः ॥ ५५७ ॥
तं युवानं बलिष्ठं च, वीक्ष्य शाखामृगस्त्रियः । जरत्कपिरतोद्विग्ना, दधुर्मुदमुदित्वरीम् ॥ ५५८ ॥
सममेष परीरम्भसम्भ्रमेण कपिस्त्रियः । काम-कोपवशात् कम्पसम्पदां पदमादधौ ॥ ५५९ ॥
स ताश्च नख-दन्तादिमृदुकण्डूयनादिकम् । रचयामासुरन्योन्यं, रहो गलितचेतनम् ॥ ५६० ॥
अथ यूथपतिर्दूरादेतदालोक्य दुःसहम् । अधावत् तारबूत्कारं, रुहरीजित्वरत्वरः ॥ ५६१ ॥
युवा कपिरपि प्रेक्ष्य, तं समायान्तमभ्यगात् । जवाज्जितं तु चेतोऽपि, मुक्त्वा स्त्रीमध्य एव सः ॥ ५६२ ॥
गृहीतगृहिणीकोपसाटोपहृदयं तदा । स तं बालीव सुग्रीवमुग्रक्रोधमयोधयत् ॥ ५६३ ॥
परस्परपरिक्षिप्तप्रतीष्टप्रावरेलोष्टकैः । तौ मत्तौ वनदेवीनामाश्चर्यं चक्रतुश्चिरम् ॥ ५६४ ॥
अथ कच्छाग्रपुच्छौ तौ, क्षुरीकाराविव क्षणात् । ऊर्ध्वौ पाश्चात्यपादाभ्यामङ्गं विविग्नतुर्मिथः ॥ ५६५ ॥
जवेनाथ जरन् दूरागतिखिन्नः कपीश्वरः । यूना स्त्रीदृष्टिपुष्टेन, निर्भग्नस्त्रासमासदत् ॥ ५६६ ॥
शिलाजतुनि स क्षिप्त्वा, मुखं सलिलकाङ्क्षया । उद्धर्तुमक्षमः पाणी, मूर्खः प्राणकृतेऽक्षिपत् ॥ ५६७ ॥
तावत् तावपि तत्रैव, विलग्नौ वज्रलेपवत् । तदुद्धारधिया मूर्खः, पश्चात् पादौ न्ययुङ्क्त तत् ॥ ५६८ ॥
लग्नौ तावपि तेत् तत्र, सतृष्णस्य क्रमौ हरेः । तेन कीलितसर्वाङ्ग, इव मृत्युमवाप सः ॥ ५६९ ॥
तदक्षिप्तपदः पूर्वमाक्षिपेद् वदनं स चेत् । अवश्यं तस्य तन्न स्याद्, दुर्मतेर्मृत्युरीदृशः ॥ ५७० ॥
भवादेशो वचस्तृष्णाप्रेरितोऽहमपि भ्रमात् । सजामि रागगैरेये, गौराङ्गि ! कपिवन्नहि ॥ ५७१ ॥
नभःसेनाऽथ वक्ति स्म, व्यक्तं लोभेन भूयसा । नाथ ! यास्यसि निर्बुद्धिर्बुद्धिस्त्रीवोपहास्यताम् ॥५७२॥

## बुद्धिस्त्रिया आख्यानकम्

ग्रामः सस्यश्रियां धाम, नन्दिग्राम इति श्रुतः । अस्ति विस्तीर्णकेदारसङ्कीर्णीभूतभूतलः ॥ ५७३ ॥
तत्र सिद्धिश्च बुद्धिश्च, प्रसिद्धे वृद्धयोषितौ । अभूतां स्फारदारिद्र्यमन्दिरे सख्यसोदरे ॥ ५७४ ॥
ग्रामेऽत्र भोलिगो नाम, यक्षो विख्यातवैभवः । वित्तसामुत् प्रभूतस्य, दाता सेवाधने जने ॥ ५७५ ॥
सिद्धिराराधयामास, ततस्तं भक्तिभासुरा । दीनारद्वितयं तुष्टो, ददौ तस्यै स चान्वहम् ॥ ५७६ ॥
अभुङ्क्त काष्ठपात्रे या, सा भुङ्क्ते हेमभाजने । दास्यं व्यधत्त याऽन्येषां, तस्या दास्योऽभवन् गृहे ॥ ५७७ ॥
कुटीरे याऽवसद् भग्ने, सौधे वसति साऽनिशम् । दधौ या चीवरं जीर्णं, दुकूलैः साऽनुकूल्यते ॥ ५७८ ॥
इत्थमालोक्य तां बुद्धिः, सिद्धिं सिद्धोरुवैभवाम् । प्रीत्या रहसि पप्रच्छ, साकूतं कौतुकादिति ॥ ५७९ ॥
॥ विशेषकम् ॥

कुलक्रमागतः स्वामी, दारिद्र्यं तावदावयोः । कुतो विभवपाथोधिजलदेवीव वर्तसे ? ॥ ५८० ॥
अथ सा कथयामास, तुष्टो यक्षः स भोलिगः । दीनारद्वितयं दत्ते, सम्पन्नेत्राममन्वहम् ॥ ५८१ ॥
इति तस्य निशम्यासौ, वाचं निश्चित्य चेतसि । तमाराद्धवती यक्षं, बुद्धिर्भक्तिभरोत्तरा ॥ ५८२ ॥

१ "रपूत्कारलद" पता० ॥ २ "थगोत्कैः संता० पाता० ॥ ३ ५६९-७० श्लोकयुगलस्थाने—लग्नौ तावपि तत् तत्र, मृत्युमाप स दुर्मतिः । मत्रक्षिप्तपदः प्रागानाक्षिपत्तं यदाननम् ॥ इत्येवंरूप एक एव श्लोकः पाता० पुस्तके वर्तते ॥ ४ तत्रैव, सत् संता० ॥ ५ "दतापव" पाता० ॥ ६ 'द्विरूपं बुद्धिर्नीय दास्य' संता० पाता० ॥ ७ अभुङ्क्त संता० ॥ ८ 'पाथोधेर्जल' पाता० ॥

तुष्टो जगाद यक्षोऽथ, किमु त्वं याचसीति ताम्। द्विगुणं सिद्धितो देयं, ममेत्येषाऽवदन्मुदा ॥ ५८३ ॥
ददौ यक्षोऽन्वहं तस्यै, दीनारांश्चतुरस्ततः। अथ सा प्रथते बुद्धिरपि सिद्धिरिवान्वहम् ॥ ५८४ ॥
बुद्धेः सिद्धिमिति ज्ञात्वा, सिद्ध्याऽऽराद्धः पुनर्ददौ। ततोऽपि द्विगुणं यक्षः, सेवाकृत्कल्पपादपः ॥ ५८५ ॥
आराद्धस्तत् पुनर्बुद्ध्या, यक्षः प्रत्यक्षतां गतः। द्विगुणं कल्पयामास, प्रत्यहं सिद्धिऋद्धितः ॥ ५८६ ॥
आराधयत् पुनः सिद्धिस्तं यक्षं क्रूरमानसा। किं ते ददामि ? तुष्टोऽस्मि, सोऽपि तामित्यभाषत ॥ ५८७ ॥
सिद्ध्या तदूचे तच्चक्षुरेकं मे काणय प्रभो !। तामेकचक्षुषं यक्षस्ततः कृत्वा तिरोदधे ॥ ५८८ ॥
बुद्ध्याऽथ पुनराराद्धो, यक्षः साक्षात् पुरोऽभवत्। निगदन् किं ददामीति, प्रीतिपूर्वरं वरम् ? ॥ ५८९ ॥
विधेहि द्विगुणं नाथ !, मम त्वं सिद्धिदानतः। तदाकर्ण्य विधायान्धां, बुद्धिं यक्षस्तिरोऽभवत् ॥ ५९० ॥
तद्वत् त्वमपि तन्नाथ !, ऋद्धिं प्राप्यापि दुर्लभाम्। अनुत्तरां श्रियं वाञ्छन्नपाये निपतिष्यसि ॥ ५९१ ॥
ऊचे जम्बूकुमारोऽथ, समारोपितनिश्चयः। उत्पथप्रस्थितिं कुर्वे, नैवाहं वाजिराजवत् ॥ ५९२ ॥

## वाजिराजाख्यानकम्

श्रीवशंवदसौन्दर्यं, श्रीवसन्तपुरं पुरम्। अस्ति क्षितिवधूहारतारप्राकारभासुरम् ॥ ५९३ ॥
जितशत्रुर्नृपस्तत्र, सुत्रामप्रतिमः श्रिया। आसीद् दोःस्तम्भदम्भोलिलोलितापरभूमिभृत् ॥ ५९४ ॥
असौ यशःकुमारस्य, यदीयस्य विसर्पतः। बभौ नभःपयोत्सङ्गे, शशी सहचरश्चिरम् ॥ ५९५ ॥
अन्यदा स नृपोऽवादीद्, वाहरत्नपरीक्षकान्।
सर्वोत्कृष्टोऽस्ति मे वाजी, राज्ये कोऽपीति कथ्यताम् ॥ ५९६ ॥
अथ ते गदिते राज्ञा, हयविद्याविदो हयम्। चक्रुः सैन्यतो वार्धेरिन्द्रवाहमिवामराः ॥ ५९७ ॥
भूपाय दर्शयामासुर्दर्शनीयममुं हयम्। ते पूर्णलक्षणं भानुरथाकृष्टमिवाष्टमम् ॥ ५९८ ॥
किञ्च विज्ञपयाञ्चक्रुस्ते महीशक्रमक्रमात्। वाहोऽयं यस्य राज्ये स्यान्न स जेयः परैरिति ॥ ५९९ ॥
तदसौ वसुधाहार !, सुधाहारहयोपमः। रक्षणीयः प्रयत्नेन, सम्पूर्णाष्टाङ्गलक्षणः ॥ ६०० ॥
इत्याकर्ण्य गिरं तेषां, सविशेषां मुदं वहन्। किञ्चिद् विचिन्तयामास, हयन्यासकृते नृपः ॥ ६०१ ॥
अथ दध्यौ नृपो योग्यं, जिनदासं वणिग्वरम्। भाति यद्यशसः शैलनाथः प्राथमकल्पिकः ॥ ६०२ ॥
असावगर्वगार्हस्थ्यव्रतमाणिक्यवारिधिः। धर्मैकध्यानधन्यस्य, तस्य न्यासाय कल्पते ॥ ६०३ ॥
इत्यालोच्य तमाकार्य, कार्या-ऽकार्यविवेककृत्। तं न्याससमर्पयामास, मेदिनीवासवो हयम् ॥ ६०४ ॥
अर्पितः ॥ नरेन्द्रेण, समुद्रेणेव चन्द्रमाः। जगृहे जिनदासेन, नभसेव महीयसा ॥ ६०५ ॥
जिनदासोऽद्भुततमं, तमङ्गीकृत्य वाजिनम्। निशान्तमाप तेजस्वी, निशान्तमिव भास्करः ॥ ६०६ ॥
तथारुचतुरस्राय, तुरङ्गाय व्यधाद् वणिग्। इन्दिरामन्दिरायास्मै, मन्दुरां मन्दिरान्तरे ॥ ६०७ ॥
श्वेतस्यास्य हयस्याधः, क्षिप्ता कोमलवालुका। भाति दीप्तिजितेवासौ, सेवार्थं चन्द्रगोलिका ॥ ६०८ ॥
सप्तभुवनव्यापिश्रीवशीकारकारणम्। श्रीजिनं वाजिनं वाऽप्येकं ध्यायति धीरधीः ॥ ६०९ ॥

---

१ बुद्धिसि° पाता० ॥ २ °मिमां द्वा° संता० पाता० ॥ ३ °तसम्मदः। उत्पथ° संता० ॥
४ °धात् 'हृ° संता० पाता० ॥

यथा यथा हयो वृद्धिं, स प्रयाति तथा तथा । खुरैर्नृपविपद्वल्लिमूलानि खनति ध्रुवम् ॥ ६१० ॥
सह स्वराज्यसम्पत्त्या, विपक्षविपदा समम् । सर्वाङ्गाणि तुरङ्गोऽयं, तुरङ्गच्छविरवीवृधत् ॥ ६११ ॥
निनाय नीरपानाय, हयनायकमन्वहम् । स श्रेष्ठी स्वयमारुह्य, रक्षादक्षः सरोवरे ॥ ६१२ ॥
वलमानोऽन्तरा तीर्थनाथं वाहस्थितस्ततः । त्रिः स प्रदक्षिणीकृत्य, नत्वाऽभ्येति निकेतनम् ॥ ६१३ ॥
निजावास-जिनावास-जलावासपथत्रयम् । मुक्त्वा हयो न जानाति, मार्गमन्यं पुरान्तरे ॥ ६१४ ॥
अथारिपृथिवीनाथाश्चेतस्येतदचिन्तयन् । कुतोऽस्य वर्धते राज्यमस्माकं क्षीयते पुनः ? ॥ ६१५ ॥
अथाकथ्यत सर्वेषां, तेषां गूढचरेश्वरैः । वाहरत्नस्य माहात्म्यं, तस्य तेजोमयाकृतेः ॥ ६१६ ॥
भूनाथस्याथ कस्यापि, मन्त्री प्राह ससाहसः । तं वाहमहमानेष्ये, नचिराच्चौर्यचर्यया ॥ ६१७ ॥
इति प्रतिज्ञां स प्राज्ञंमन्यः कृत्वा नृपाज्ञया । श्रावकारम्भदम्भेन, प्रचचाल घनैर्धनैः ॥ ६१८ ॥
श्रीवसन्तपुरे तत्र, गत्वा श्रावकतत्त्ववित् । वक्रेच्छो रचयाञ्चक्रे, स चैत्यपरिपाटिकाम् ॥ ६१९ ॥
स श्रद्धावानिव श्राद्धसद्मसु च्छद्मसुस्थितः । जिनार्चाभ्यर्चनं कुर्वन्, जिनदासगृहं गतः ॥ ६२० ॥
तन्वानस्तीर्थनाथस्य, पूजामथ यथाविधि । स्वावासे जिनदासेन, सानन्देनाभिनन्दितः ॥ ६२१ ॥
अथ भक्तिपथन्यस्तमनाः सम्मानतो मतः । तं साधर्मिकवात्सल्याज्जिनदासोऽवदन्मुदा ॥ ६२२ ॥
अधानवद्यजैनेन्द्रधर्मसम्बन्धबान्धव ! । भोजनेन विधेहि त्वं, मम धाम्नि पवित्रताम् ॥ ६२३ ॥
विनते जिनदासेऽस्मिन्नतिभक्त्या वदत्यपि । अनिच्छन्निव तस्थौ स, कार्यं पूर्णमिति स्मरन् ॥ ६२४ ॥
अथासौ गाढमभ्यर्थ्य, भोजितो भक्तिपूर्वकम् । स्वावासे जिनदासेन, निशायामपि वासितः ॥ ६२५ ॥
केनापि सुहृदा श्रेष्ठी, जिनदासोऽप्यनीयत । महोत्सवजुषा सौधे, निजे स्वापयितुं निशाम् ॥ ६२६ ॥
असावथ निशीथिन्यामुत्थितः कूटधार्मिकः । आशु तं वाहमारुह्य, निःससार त्वरातुरः ॥ ६२७ ॥
सोऽन्यतः प्रेर्यमाणोऽपि, जगाम सरसीं हयः । पीत्वाऽम्बु वलितः प्राप्तो, यत्राऽऽस्ते जिनमन्दिरम् ॥ ६२८ ॥
प्रदक्षिणात्रयं तत्र, दत्त्वा पुनरगाद् गृहम् । अत्यर्थं नुद्यमानोऽपि, स वाजी नान्यतो ययौ ॥ ६२९ ॥
ततो विभातदोषायां, विभावर्यां भयैकभूः । मुक्त्वा वाहवरं धूर्तश्चपलः पलायितः ॥ ६३० ॥
अथाखिलनिशावाहखिन्नो वाहशिरोमणिः । विवेश मन्दुरामिन्दुः, प्रत्यग्गिरिगुहामिव ॥ ६३१ ॥
अथ प्रातः समायातः, मायातरुपावकः । जिनदासो निजं धाम, धामनाथ इवाम्बरम् ॥ ६३२ ॥
अथ पृष्टो निशावृत्तं, वृत्तान्तं वाजिनो जनैः । तद्भीतो मन्दुरां गत्वा, श्रेष्ठी हृष्टोऽश्ववीक्षणात् ॥ ६३३ ॥
वाजिनं तमगन्तारमगं तारमयं यथा । सोल्लासमर्चयामास, जिनदासः प्रमोदवान् ॥ ६३४ ॥
रत्नत्रयत्रिमार्गीं तद् , भवाब्धवप्रेरितोऽत्यजन् । अहं पूज्यो भविष्यामि, महतां स हयो यथा ॥ ६३५ ॥
कनकश्रीरथ प्राह, स्वामिन्नित्यातुरः स्फुरन् । पुण्यहीन इव प्रौढपुण्योऽपि परितप्यसे ॥ ६३६ ॥

पुण्यहीनाख्यानकम्

हंसाभवैजयन्तीभिर्भ्राजयन्ती नभोनदीम् । जयन्ती स्वःपुरीमस्ति, जयन्तीति पुरी स्मृता ॥ ६३७ ॥

---

१ °दतरै° संता० पाता० ॥ ३ °तो मतः संता० पाता० ॥ २ °स्मिन्निति संता० पाता० ॥
४ °मार्गात् त° पाता० ॥ ५ °भुरं स्फु° पाता० ॥ ६ °री भुता संता० पाता० ॥

धनदद्योत्सवस्तत्र, धनदत्तो महावणिक् । आसीद् वसुमतीसाहचर्यवर्यगृहस्थितिः ॥ ६३८ ॥
एकदा बिभरामास, गर्भे वसुमती सुतम् । दोषाकरं तं प्राचीव, सवितुर्व्ययकारकम् ॥ ६३९ ॥
जातमात्रे पुनस्तत्र, प्रदोषे तमसां पदे । गृहस्य गगनस्येव, क्षीणो भास्वद्वसुव्रजः ॥ ६४० ॥
जातेऽष्टवर्षमात्रेऽस्मिन्, माता मृत्युमवाप सा ।
**पुण्यहीन** इति ख्यातिं, तल्लोके गतवानयम् ॥ ६४१ ॥
तदन्यसद्मसु स्वैरं, कर्म निर्माय जीवति । मत्वेति स गृहे निन्ये, मातुलेनातुलेच्छया ॥ ६४२ ॥
मातुलस्य गृहं तस्मिन्, गते कतिपयैर्दिनैः । मुष्टं चौरैर्निशाखातभित्तिक्लृप्तधनोच्चयैः ॥ ६४३ ॥
अथ तं प्रथते लोको, निर्भाग्यैकशिरोमणिम् । तन्निर्वेदनिधिः सोऽपि, ययौ देशान्तरं प्रति ॥ ६४४ ॥
असौ पुरि तमालिन्यां, मालिन्याङ्गीकृतस्ततः । सिषेवे वणिजां नाथं, विनयी विनयन्धरम् ॥ ६४५ ॥
गतेऽस्मिन् दिवसैः कैश्चित्, शिखिदग्धालयो वणिक् ।
स जनैः पुण्यवान् मेने, जीवन्निःसृतमानुषः ॥ ६४६ ॥
तत् खिन्नः **पुण्यहीनो**ऽयं, बोहित्थमधिरूढवान् । **धनावहेन** वणिजा, मणिजालजुषा समम् ॥ ६४७ ॥
प्रवीर इव बोहित्थः, प्रत्यर्थिपृतना इव । वीचीर्विदारयन्नब्धेः, परं पारं स यातवान् ॥ ६४८ ॥
अथोपार्ज्य धनं भूरि, वलितोऽसौ **धनावहः** । सहैव **पुण्यहीनेन**, धनोपार्जनशालिना ॥ ६४९ ॥
अमज्जत् तज्जले सिन्धोरन्तः प्रवहणं ततः । तत्रापि फलकं प्राप्य, **पुण्यहीनस्तु** निर्ययौ ॥ ६५० ॥
**पुण्यहीनो**ऽम्बुधिं तीर्त्वा, संसारं शमवानिव । अवापदटवीं काञ्चित्, कस्तूरीपत्रवद् भुवः ॥ ६५१ ॥
अथो चरन्नरण्यान्तः, स ददर्श मुदाऽऽस्पदम् । विस्मितो वेश्म यक्षस्य, वनीधम्मिल्लसन्निभम् ॥ ६५२ ॥
स तमाराधयामास, यक्षमक्षोभमानसः । आत्माहृतैर्जलैः पुष्पैः, फलैश्चाद्भुतभक्तिभाक् ॥ ६५३ ॥
अथ तुष्टोऽवदद् यक्षः, **पुण्यहीनं** प्रति द्रुतम् । मम हेममयः केकी, पुरो नर्तितुमेष्यति ॥ ६५४ ॥
पिच्छं गच्छन्नसावेकं, केकी यन्मुञ्चति स्वयम् । ग्राह्यं तद् भवता नित्यं, चामीकरमयं रयात् ॥ ६५५ ॥
यक्षस्येति वचः श्रुत्वा, प्रीतस्तत्र स तस्थिवान् । प्रनृत्य गच्छतो हैमं, पिच्छं गृह्णाति केकिनः ॥ ६५६ ॥
एकदा तेन मूर्खेण, गच्छन् हैमः शिखी धृतः । एककालमशेषाणि, पिच्छान्यादातुमिच्छता ॥ ६५७ ॥
तत्पाणिस्पर्शमात्रेण, केकी काकीबभूव सः । पिच्छान्यग्रे गृहीतानि, काकपिच्छानि चाभवन् ॥ ६५८ ॥
आत्मानमथ निर्भाग्यमन्वशोचदसौ तदा । तुल्यकालं ददद् दृग्भ्यां, जलं लक्ष्म्यै सुखाय च ॥ ६५९ ॥
ततः स इव मूर्खत्वं, वृथा त्वमपि मा कृथाः । आश्रमादिकमज्ञोऽपि, किमज्ञ इव वर्तसे ? ॥ ६६० ॥
तारुण्येऽपि मतग्राही, कदाऽपि विकृताशयः । पूर्वोपार्जितपुण्यानामपि नाशाय जायसे ॥ ६६१ ॥
अथावादि सुधावादि, वचस्तां प्रति जम्बुना । न भवामि मनस्तापैकमठः **कमठो** यथा ॥ ६६२ ॥

<u>कूर्माख्यानकम्</u>

भूधरो विन्ध्यनामाऽस्ति, यत्र[1] स्पर्धात् परस्परम् । वियदुर्वीजुषः कुर्युर्गर्जिं पर्जन्यदन्तिनः ॥ ६६३ ॥
अभूत् **कादम्बिनी** तस्य, कामिनीवाटवी तटे । गम्भीरोऽस्यां बभौ नाभीरूपः कूपश्च कश्चन ॥ ६६४ ॥

---

१ यत्र कुञ्जरगर्जया । प्रावृषीव सदाऽम्भोदभ्रान्त्या नृत्यन्ति केकिनः ॥ ६६३ ॥ पाता० ॥

भूरिशैवालजालेन, तत्र च्छन्नमुखाम्भसि । कूपेऽन्तः कोटिशोऽभूवन्, जीवाः क्षीबा जलोद्भवाः ॥ ६६५ ॥
कदाचिद् वातसञ्जातशैवलच्छिद्रवर्त्मना । कूर्मः कूपगतः कश्चिदिन्दुं शारदमैक्षत ॥ ६६६ ॥
स्वकीयजन्मसाफल्यश्रियो मुखमिवामलम् । विलोक्य कूर्मस्तं पर्वशर्वरीशममोदत ॥ ६६७ ॥
आलोकयतु मे लोकः, सर्वस्तदिदमद्भुतम् । इति वात्सल्यतोऽगच्छत्, कच्छपः पयसस्तलम् ॥ ६६८ ॥
कूर्मः समानयद् यावत्, कुलं तद्दर्शनाकुलम् । तावत् तच्छिद्रमाच्छादि, पुनः सेवालजालकैः ॥ ६६९ ॥
भ्रामं भ्रामं जले चक्षुश्चिक्षेपोर्द्ध्वं स कच्छपः । शेवालजटिले तत्र, न तु पूर्णेन्दुमैक्षत ॥ ६७० ॥
तदेनं प्राप्य सूरीन्दुं, कूर्मवन्न त्यजाम्यहम् । कुतोऽस्य दर्शनं भूयो, मोहच्छन्ने भवावटे ? ॥ ६७१ ॥
अथो कनकवत्याह, जितवाक्पतिमर्त्ति पतिम् । प्रति प्रतिकृतिर्मा भूस्त्वं मासाहसपक्षिणः ॥६७२ ॥

मासाहसपक्षिण आख्यानकम्

अटवी विद्यते काऽपि, व्योमव्यापिमहीधरा । शिबिरस्थितियन्मृत्योः, क्रूरसत्त्वौघभीषणा[2] ॥ ६७३ ॥
इन्धनार्थमथान्येद्युः, समं सार्थेन केनचित् । अटव्यां कोऽप्यगात् तस्यां, प्रान्ते कस्यापि भूभृतः ॥ ६७४ ॥
सुप्तं मृगेन्द्रमद्राक्षीत्, स तत्रोत्कटदंष्ट्रकम् । आसन्नप्रविलम्बेन्दुकलं कालमिवाग्रिमम् ॥ ६७५ ॥
कृतान्तस्येव सिंहस्य, मुखे तस्य विदारिते । दन्ताग्रलग्नमांसांशलोभात् कोऽप्यविशत् खगः ॥ ६७६ ॥
मा साहसमिदं कार्षीर्ब्रुवन्निति मुहुर्मुहुः । मासाहसमिति ख्यातिं, तत् प्राप स विहङ्गमः ॥ ६७७ ॥
वार्यमाणोऽपि तेनायं, पुरुषेण पुनः पुनः । मांसलोभाभिभूतत्वात्, तत्याज नहि साहसम् ॥ ६७८ ॥
सिंहेनाथ प्रबुद्धेन, प्रविशन् स मुखान्तरे । उच्चैश्चपेटापातेन, हतो हस्तिविघातिना ॥ ६७९ ॥
भार्याभिर्वार्यमाणोऽपि, स इव त्वमपि स्फुटम् । पश्चात्तापास्पदं भावी, तदिदं मा कृथा वृथा ॥ ६८० ॥
अथ जम्बूर्वचः प्राह, शुचि प्राहतकल्मषम् । अशर्मभाजनं सोमशर्मेव न भवाम्यहम् ॥ ६८१ ॥

सहजमित्रादिमित्रत्रितयसङ्गतं सोमशर्माख्यानकम्

पत्तनं पाटलीपुत्रमित्यस्ति क्षितिमण्डनम् । शौर्यवज्रायुधस्तत्र, राजा वज्रायुधोऽभवत् ॥ ६८२ ॥
आसीत् पुरोहितस्तस्य, राज्यव्यापारभारभृत् । प्रख्यातः सोमशर्मेति, शर्मश्रीकेलिमन्दिरम् ॥ ६८३ ॥
एकः सखा सुखाधारः, सहमित्राभिधोऽन्वहम् । बद्धः प्रेमगुणेनेव, तेन सञ्चरते सह ॥ ६८४ ॥
पर्वण्येव सखाऽभ्येति, पर्वमित्राभिधोऽपरः । तं प्रति श्रीनिधिं प्रातः, सरोजमिव षट्पदः ॥ ६८५ ॥
प्रणाममित्रनामाऽन्यः, सखा तेन कदाचन । आपतन् प्रतिपच्चन्द्र, इवाग्रे नम्यते ततः ॥ ६८६ ॥
अन्वहं सहितस्तेन, सहमित्रेण स स्फुरन् । पुर्याः पुरोहितस्तस्याश्चक्षुःप्रियमदिप्रियत् ॥ ६८७ ॥
कथञ्चित् कुपितं भूपं, सम्यग् विज्ञाय सोऽन्यदा । सदनं सहमित्रस्य, ययौ निशि पुरोहितः ॥ ६८८ ॥
तदनुद्घाटितद्वारं, बहिः स्थित्वा कृतारवः । स भृङ्ग इव तन्मित्रसद्म पद्ममिवामुचत् ॥ ६८९ ॥

१ °ह, मत्या हसितवाक्पतिम् । पतिं प्रति कृतिन् ! मा भूस्त्वं मासाहसपक्षिवत् ॥ ६७२ ॥ इतिरूपः पाठः खंता० पाता० ॥ २ गजेन्द्रनगजव्याननृत्यत्केकिकुटुम्बका ॥ इति पाता० पाठः ॥
३ °स इति खंता० पाता० ॥

पुरोधाः पर्वमित्रस्य, ततो धाम जगाम सः । विकस्वरमुखं शैलनिकुञ्जमिव कुञ्जरः ॥ ६९० ॥
अभ्युत्थानमथाऽऽधत्त, तस्यायं सम्मदी सुहृत् । आयातायात मद्गेहमद्य पूतमिति ब्रुवन् ॥ ६९१ ॥
[1]पुरोहितोऽथ पर्यङ्के, तन्निर्दिष्टे निविष्टवान् । पुरःस्थं तं प्रति प्राह, प्रौढभीतिधुरन्धरः ॥ ६९२ ॥
क्रुद्धः कृतान्तरूपोऽयं, भूपो मां प्रति सम्प्रति । यदि नश्यामि नेदानीं, तन्मां निर्दलयत्ययम् ॥ ६९३ ॥
तदशेषं विहाय त्वं, सहायत्वं मम भज । गमिष्यामि विदेशेऽपि, प्राणत्राणपरोऽधुना ॥ ६९४ ॥
निशम्येदं तदा पर्वमित्रेणोक्तं त्रुटन्मुदा । यदि ते मम देहेन, गेहेन विभवेन च ॥ ६९५ ॥
भवेदत्र परित्राणं, ददामि तदिदं मुदा । परं राजविरुद्धेऽर्थे, किं कुर्वेऽहं कुटुम्बवान् ? ॥ ६९६ ॥
॥ युग्मम् ॥

ततः सत्यतया मित्रं, यदि त्वमसि तत् प्रभो ! । कथमप्यन्यथाकारमितो देशान्तरं कुरु ॥ ६९७ ॥
अन्यथा मद्गृहे स्वामिन् !, यदि त्वामागतं नृपः । [2]ज्ञातर्ज्ञास्यति तद् यन्त्रे, मत्कुलं पीलयिष्यति ॥ ६९८ ॥
इत्युक्ते तेन तद् गच्छन्, नरेश्वरपुरोहितः । अन्ववर्ति स्वयं किञ्चिद्, दाक्षिण्याद्वा गृहाङ्गणम् ॥ ६९९ ॥
तद्गृहान्निःसृतो गच्छन्नचिन्तयदयं स्वयम् । अहो ! मे मन्दभाग्यस्य, न किञ्चित् त्राणकारणम् ॥ ७०० ॥
तावेवैतौ स एवाहं, जातौ किमधुनेदृशौ ? । आः ! ज्ञातमथवा नास्ति, प्रसादो जगतीभुजः ॥ ७०१ ॥
न मे कुत्रापि कोऽप्यस्ति, किमभ्रात् पतितोऽस्म्यहम् ? ।
आसीन्मम ययोरास्था, तयोश्चर्येयमीदृशी ॥ ७०२ ॥
अहो ! मे निर्विवेकत्वं, यन्नीतौ मित्रतामिमौ । यौ मयि क्षीणदाक्षिण्यावित्थं दुर्व्यसनातुरे ॥ ७०३ ॥
तृतीयस्यापि पश्यामि, सुहृदः सौहृदक्रमम् । पश्चान्नहि मनो येन, क्षिणोति तदवीक्षणम् ॥ ७०४ ॥
इति निश्चित्य चित्तेन, तदगारमगादसौ । सचक्रशक्रः सचक्रे, सोऽप्यमुं गृहमागतम् ॥ ७०५ ॥
अब्रवीच्च कथं दुःस्था, तवावस्थेयमीदृशी ? । मन्दमन्दमिदानीं च, किमागमनकारणम् ? ॥ ७०६ ॥
अथास्य कथयामास, विभो वृत्तान्तमात्मनः । मित्रद्वयविमुक्तस्य, परित्राणार्थितां च ताम् ॥ ७०७ ॥
परं पुरा मया किञ्चिन्न तवोपकृतं तथा । इत्यात्मनश्च न्यूनत्वं, मन्दागमनकारणम् ॥ ७०८ ॥
सोऽप्यवोचत मित्राहं, समीहे नहि किञ्चन । सद्भूतभक्तिमात्रोऽस्मि, तत्राभून्न्यूनता न ते ॥ ७०९ ॥
तद्भद्र ! मास्म कार्षीस्त्वं, शङ्कातङ्कातुरं मनः । परित्रातरि मित्रेऽस्मिन्, कुतस्त्यं भूभुजो भयम् ? ॥ ७१० ॥
इत्थं वाक्सुधया दत्त्वा, स्वस्ति सौवस्तिकं प्रति । स गुणी प्रगुणीचक्रे, रथं जवनवाजिनम् ॥ ७११ ॥
दोःस्तम्भे बिभ्रता तेन, मित्रेणासदृशं बलम् । शम्बलं च रथे तस्मिन्नारोप्यत पुरोहितः ॥ ७१२ ॥
राज्यान्तरमयो नीत्वा, समुपस्थाय पार्थिवम् । तेनासौ लम्भितः कीर्तेरास्पदं सुखसम्पदाम् ॥ ७१३ ॥
त्रयाणामपि मित्राणां, स स्वभावं विभावयन् । प्रणाममित्रमद्राक्षीत्, प्राणेभ्योऽप्यतिवल्लभम् ॥ ७१४ ॥
दृष्टान्तोपनयश्चायं, योऽत्र भूपः प्रकीर्तितः । स कर्मपरिणामोऽस्य, सोऽयं जीवः पुरोहितः ॥ ७१५ ॥
सहजं मित्रमेतस्य, शरीरं परिभाव्यताम् । तत् कर्मनृपतेः कोपे, जीवेन सह न व्रजेत् ॥ ७१६ ॥
ज्ञातिप्रभृतयः सर्वे, पर्वमित्रस्य सन्निभाः । श्मशानस्थानपर्यन्तमनुयान्तीह देहिनम् ॥ ७१७ ॥
प्रणाममित्रतुल्यस्तु, धर्मोऽयमवगम्यताम् । जन्मान्तरेऽपि यो जीवं, गच्छन्तमनुगच्छति ॥ ७१८ ॥
जीवस्य यः परत्रापि, श्रियं यच्छति वाञ्छिताम् । ज्ञाति-देहौ विहायाहं, तत् तमाराद्धुमुद्यतः ॥ ७१९ ॥

---

१ भूपः सम्प्रति मां प्रति खंता० ॥ २ प्रतिभास्यति खंता० ॥ ३ 'स्पदः खंता० ॥

अथ मन्मथवीरस्य, मूर्तयेव जयश्रिया । जयश्रिया प्रभुः प्रोचे, शौचेनाञ्चितमानसः ॥ ७२० ॥
इत्थं मोहयतो नाथ !, नागश्रीवत् तवानृतैः । नागः श्रीमन् ! किमत्युग्रं, मानसं साधु बाधते ? ॥ ७२१ ॥

## नागश्र्याख्यानकम्

नगरे नगरे कारंकारप्राकारचारुणि । रमणीयाभिधे राजा, जज्ञे किल कथाप्रियः ॥ ७२२ ॥
अचीकथत् कथाः पौरान्, वारंवारेण सोऽन्वहम् ।
स च कस्यचिदन्येद्युर्वारकोऽभूद् द्विजन्मनः ॥ ७२३ ॥
दुष्कर्मजन्मनां मौर्ख्य-दारिद्य-व्यसना-ऽऽपदाम् । क्रमागत इवाऽऽवासः, स द्विजोऽचिन्तयत् तदा ॥७२४॥
रसना रसनायैव, मम धिग् ! वेधसा कृता । आयसीव कुशी स्तब्धा, स्वनामग्रहणेऽपि या ॥ ७२५ ॥
ब्रुवे यदि न जानेऽहमिति तद् दुष्टभूपतिः । प्रवेशयति कारायां, दुर्ग्राहग्रहिलो हि माम् ॥ ७२६ ॥
चिन्ताहेतुं दुहित्रा स, कुमार्या भाषितोऽब्रवीत् ।
साऽप्यूचे तात ! मा कार्षीश्चिन्तासन्तापितं मनः ॥ ७२७ ॥
वारे तव मया तात !, कथनीया कथानिका । इत्युक्त्वा सा शुचिर्वेषं, वासोभिर्विशदैर्व्यधात् ॥ ७२८ ॥
गत्वा नृपान्तिकं दत्त्वा, जयेत्याशिषमाह सा । कथां शृणु यदि श्रीमन् !, कथाकौतुहली भवान् ॥ ७२९ ॥
दक्षो निःक्षोभतां वीक्ष्य, तादृक्षां क्षितिवल्लभः । मेने तद्वचनस्यैव, कथातः कौतुकं महत् ॥ ७३० ॥
साऽप्याचख्यौ पुरेऽत्रैव, नागशर्माऽस्ति माणवः ।
सोमश्रियामभूत् पत्न्यां, नागश्रीस्तस्य नन्दनी ॥ ७३१ ॥
कस्मैचिद् द्विजचट्टाय, दत्त्वा तां पितरौ स्वयम् । कार्येणौद्वाहिकेनैव, जग्मतुर्नगरान्तरम् ॥ ७३२ ॥
एकाकिन्यां गृहे तस्यां, स चट्टः सायमागमत् । तया श्रियोऽनुसारेण, चक्रे भोज्यादिरौचिती ॥ ७३३ ॥
सतूलीकं च पल्यङ्कं, निजाल्यमहाधनम् । शयनायार्पयित्वाऽस्मै, चिन्तयामास्तुपीति सा ॥ ७३४ ॥
महीमहीनामहिभिर्जानिऽस्ति च न मत्कुणः । शयनं तत् क मे भूसौ, वर्यं पर्यङ्कवर्जितम् ! ॥ ७३५ ॥
शये पर्यङ्कपर्यन्तेऽत्रैव तावन्निशामिमाम् । कोऽपि नो पश्यति ध्वान्तैर्यदन्धङ्करणोपधैः ॥ ७३६ ॥
इति सुष्वाप सा तत्र, निर्विकारैव बालिका । तदङ्गसङ्गे शृङ्गारसङ्कटे स द्विजोऽपतत् ॥ ७३७ ॥
लज्जा-क्षोभादिसंरुद्धमनःशूलाकुलीकृतैः । प्राणैः स तत्यजे चट्टो, वचनीयभयादिव ॥ ७३८ ॥
अचिन्तयत् ततः साऽपि, पापिन्या धिगसौ मम । एकत्र स्वापपापद्रुरिहापि सफलोऽभवत् ॥ ७३९ ॥
विभावरी विभात्येषा, यावत् तावदमुं द्विजम् । निक्षिपामि क्षितेरन्तर्यथा जानाति कोऽपि न ॥ ७४० ॥
इत्यसौ खण्डशोऽकार्षीत्, तूर्णं तस्य कलेवरम् । न्यधान्निधानवद् गर्ते, खनित्वा च स्वयं रयात् ॥ ७४१ ॥
गर्तं ततस्तमापूर्य, लिप्त्वाऽसौ गोमयद्रवैः । पुष्पैर्गन्धैश्च धूपैश्च, वासयामास तां रसां ॥ ७४२ ॥
पितरौ चागतौ तस्या, गृहीत्वौद्वाहिकं विधिम् । अतीतस्तु कथाकालः, श्रीमन्नुत्सूरतोऽमुना ॥ ७४३ ॥
कथं द्रक्ष्याम्यहं तामित्युक्ते राज्ञा जगाद सा । स्वामिन्नहं सा संसारनाटिकानटने नटी ॥ ७४४ ॥
कुमारि ! तदिदं सत्यं, यदत्र कथितं त्वया ? । पृष्टेति सा पुनर्वाचमुवाच नृपतिं प्रति ॥ ७४५ ॥

---

१ 'रफरिमा' संता० ॥ २ शुचि घेयं, संता० ॥ ३ 'मासिषानिति संता० पाता० ॥

याः कथास्त्वं पुराऽश्रौषीस्तथ्यास्ता भूपते ! यथा । तथेयमपि तथ्याऽस्तु, चित्रहेतुविशेषतः ॥ ७४६ ॥
एवं विप्लावितः क्ष्मापस्तया नागश्रिया यथा । तथा त्वमपि किं नाथ !, विप्लवयसि कल्पितैः ? ॥ ७४७ ॥
कल्याणसलिलाधारकम्बुना जम्बुना ततः । समगद्यत सद्यस्कहारहूरानिभं वचः ॥ ७४८ ॥
सन्तु दन्तुरितानन्दाः, कथास्तन्वि ! तथाविधाः । असावस्तु विचारस्तु, प्रमाणं यस्त्वया कृतः ॥ ७४९ ॥

ललिताङ्गाख्यानकम्

तथाहि गाहितस्वर्गनगरीवैभवं भुवि । पुरं कन्दर्पकोशाख्यमस्ति कन्दर्पदर्पभूः ॥ ७५० ॥
धराधौरेयतां भेजे, राजा तत्र शतायुधः । पञ्चेषुं तृणवन्मेने, यं विलोक्य त्रिलोक्यपि ॥ ७५१ ॥
सुवर्णभूमिभृद्वंश्यजातमात्रगिरिस्तनी । तस्य लीलावती नाम, बभूव प्राणवल्लभा ॥ ७५२ ॥
शृङ्गारभारं निर्माय, सा कदाचन कामिनी । तस्थौ गवाक्षमारुह्य, मुग्धजननिरीक्षिता ॥ ७५३ ॥
तन्मुखेन्दुस्तदा चन्द्रजयश्रीनाटिकानटः । बभौ मौक्तिकताडङ्कपारिपार्श्वकपेशलः ॥ ७५४ ॥
लावण्यामृतसिक्तेऽस्याः, सिन्दूरतिलकं मुखे । त्रिनेत्रदग्धकामद्रुनवकन्दलवद् बभौ ॥ ७५५ ॥
तन्मुखावासिनः काममूपतेश्चामरायितम् । मेजेऽलकैर्मृदुमरुल्लोलैर्भ्रूच्छत्रपार्श्वयोः ॥ ७५६ ॥
चिक्रीड नासिकाशालिभ्रूशाखाप्रेङ्खणाद्रुते । तस्या नेत्रद्वयीरश्मिदोलाबन्धे मनोभुवः ॥ ७५७ ॥
अदर्शि तरुणैस्तस्या, रदपङ्क्तेः रुचिः शुचिः । मनोरथस्फुरत्पुष्पायुधचापोत्थबाणवत् ॥ ७५८ ॥
वैकक्षमास्यचापस्य, पुष्पेषोरिषुधिश्रियम् । तस्याः शिश्राय धम्मिल्लः, पुष्पपूरेण पूरितः ॥ ७५९ ॥
इत्यसौ नित्यसौभाग्यभङ्गीभाग्यनिकेतनम् । स्निग्धा स्मरपिशाचेन, सर्वाङ्गमुदयन्मुदा ॥ ७६० ॥
शम्भुक्षोभादिव दिवः, समुत्तीर्णं मनोभवम् । साऽपश्यल्ललिताङ्गाख्यं, नरं तुरगगामिनम् ॥ ७६१ ॥
शिरःपरिसरप्रेङ्खन्मायूरातपवारणम् । हरिणाक्षीमनोरत्नहरणैकमलिम्लुचम् ॥ ७६२ ॥
किञ्च श्रीचन्दनस्यन्दजनिताङ्गविलेपनम् । स्मरं रचितसन्नाहमिव लोकत्रयीजये ॥ ७६३ ॥
मानिनीमानभङ्गाय, शुभ्रचीरापदेशतः । पर्वगर्वितशीतांशुस्फीतांशुपरिवारितम् ॥ ७६४ ॥
स्कन्धदेशसमारूढप्रौढधम्मिल्लकैतवात् । मूर्तशृङ्गारभारस्य, नित्यं वोढ्रीकृतां गतम् ॥ ७६५ ॥
॥ पञ्चभिः कुलकम् ॥
दत्तदृष्टिमथैतस्मिन्, स्वस्य द्वैराज्यकारिणि । पञ्चेषुः पञ्चभिर्बाणैस्तां जघान घनस्तनीम् ॥ ७६६ ॥
तामसौ कामसौन्दर्यजयशाली व्यलोकयत् । ललिताङ्गोऽपि तत्कालं, कौतुकोत्तानलोचनः ॥ ७६७ ॥
कामस्य तां वशीकारमन्त्रसिद्धिमिवाङ्गिनीम् । वीक्ष्योन्मुखः कृतस्तम्भ, इति चिन्तितवानयम् ॥ ७६८ ॥
मुखे वसति मन्येऽस्याः, स्वयं मदनभूपतिः । अन्यथा कथमत्रैव, स्फुरत्यविरतं रतिः ॥ ७६९ ॥
विष-पीयूषयोरेषा, किमुपादानकारणम् ? । अस्याः कटाक्षा येनैते, सम्मोह-सुखयोः क्षमाः ॥ ७७० ॥
अस्याः काममभूत् कामः, स्वयं वेधा मृगीदृशः । क्व पुराणमुनिस्त्वेतन्निर्मातुं रूपमीश्वरः ? ॥ ७७१ ॥
शिरो विधुन्वन् कामेषुनितस्तत इव क्षिपन् । विचिन्त्येत्यचलद् गेहं, प्रति स श्रेष्ठिनन्दनः ॥ ७७२ ॥
तस्मिन् दृष्टिपथातीते, सा महीपतिवल्लभा । अभूत् कामग्रहग्रस्ता, योगिनीवैकमानसा ॥ ७७३ ॥

---

१ 'हेतुविशे' संता० ॥ २ चादैक' संता० ॥ ३ कुतुकोत्तालोचनः संता० पाता० ॥

प्रीतिर्न गीते नानन्दश्चन्दने न धृतिर्विधौ । आत्मनेव विना तेन, जज्ञे तस्यास्तनोरिव ॥ ७७४ ॥
ज्ञात्वा विकारमाकार-चेष्टिताभ्यामथ स्वयम् । यथार्थनामा तामाह, चेटी चतुरिकाह्वया ॥ ७७५ ॥
सत्यं स्वामिनि! किं नाम, तं युवानं समीहसे? । युक्तं वा यन्मृणालिन्या, रविरेव प्रियङ्करः ॥ ७७६ ॥
अथ लीलावती प्राह, स्मरदाहातुराक्षरम् । हञ्जे! चतुरिकैवासि, यदिदं कौशलं तव ॥ ७७७ ॥
वशीकृताबलालोकं, पुष्पपेशलया दृशा । कथञ्चित् तं स्मराकारं, प्रीतये मम मेलय ॥ ७७८ ॥
ज्ञात्वा कुतोऽपि तं साऽपि, समुद्रप्रियनन्दनम् । ललिताङ्गमुपेत्यैवं, व्याजहार चटूक्तिभिः ॥ ७७९ ॥
त्वया लीलावतीदेव्याश्चौर! जह्रे मनः किल । गताश्रयस्तु तां हन्ति, हन्त! बाणैर्मनोभवः ॥ ७८० ॥
त्वद्वियोगेऽभवत् तस्याः, प्रावृट्कालस्तथाऽश्रुभिः । प्रयाणोन्मुखतां भेजे, यथा हंसोऽतिबाधितः ॥ ७८१ ॥
अयं वियोगो दावाग्निर्न दीपकलिका पुनः । शान्तिं याति न तन्मुग्ध!, किन्तु हन्तोपचीयते ॥ ७८२ ॥
इत्थं भवद्वियोगोत्थसन्तापोपशमाशया । वीजयन्तीं हसत्येषा, मामहो! कदलीदलैः ॥ ७८३ ॥
॥ युग्मम् ॥
विशिष्टयोगतां यस्यास्त्वद्वियोगः किलाभजत् । भवन्मयमतः सर्वं, सा पश्यत्यवनीतलम् ॥ ७८४ ॥
स्वयं तत् त्वमुपागत्य, तापनिर्वापणं कुरु । युक्तं तु नायशस्तस्या, ग्रहीतुं तव सर्वथा ॥ ७८५ ॥

अथोचे ललिताङ्गोऽपि, सङ्गोपितनिजाशयः ।
अयि! क्वाहं वणिग्मात्रं!, सा क्व वा राजवल्लभा! ॥ ७८६ ॥

प्रच्छन्नमपि कर्मैतत्, कर्तुं किमिति शक्यते? । सुप्तस्यापि हरेर्दंष्ट्रां, को वीक्षितुमपि क्षमः? ॥ ७८७ ॥

साऽप्यूचे न त्वया सौम्य!, चिन्ताऽर्थेऽस्मिन् विधीयताम् ।
अस्मिन् संयोजनोपाये, विधिमूर्तिमवेहि माम् ॥ ७८८ ॥

अथानुमतिमासाद्य, सद्यः सा तस्य दूतिका । विज्ञा विज्ञपयामास, राज्ञीं गत्वा यथातथम् ॥ ७८९ ॥
तद्योगकामा वामाक्षी, यावदस्त्यन्यदा मुदा । पुरे तावदभूत् तत्र, प्रमोदी कौमुदीमहः ॥ ७९० ॥
स्वयं तदा मुदा द्रष्टुं, शरत्कालभवां श्रियम् । आखेटकार्थं भूमीभृदलञ्चक्रे वनावनिम् ॥ ७९१ ॥
तदा च राजवेश्मान्तर्विजनीभूतभूतले । साऽनङ्गमतिमान्याजाल्ललिताङ्गमवीविशत् ॥ ७९२ ॥
सस्वजे सुचिरात् प्राप्य, लीलावत्यथ तं तथा । यथा तेनैकतामाप, चेतनेवात्मना समम् ॥ ७९३ ॥
कथञ्चिच्च विचारैककोविदाः सौविदास्तदा । निश्चितं कश्चिदप्यत्र, प्रविवेशेति तेऽवदन् ॥ ७९४ ॥
समाप्याखेटकं राज्ञे, सम्प्रासाय सदाऽथ ते । ऊचुर्निशान्ते कोऽप्यस्तीत्यच्छलादानपूर्वकम् ॥ ७९५ ॥
स्वयं सशब्दं सन्नद्धा, द्वयं हित्वाऽथ भूपतिः (?) । चौरादप्यधिकं मन्दमन्दमन्तःपुरेऽविशत् ॥ ७९६ ॥
तदा चतुरिकाद्वारदत्तदृष्टिर्महीपतिम् । दृष्ट्वाऽऽयान्तं द्रुतं तत्र, लीलावत्यै व्यजिज्ञपत् ॥ ७९७ ॥
स जालकपथेनाथ, लीलावत्या तयाऽपि च । क्षिप्तः पश्चात्प्रदेशस्थाशुचिकूपेऽपतत् कुधीः ॥ ७९८ ॥

दौर्गन्ध्येनान्धलस्तत्र, प्राच्यमुक्तं स्मरन् सुखम् ।
दध्यौ भोक्ष्ये पुनर्भोगान्, निर्यातो नेदृशानहम् ॥ ७९९ ॥

राज्ञी-दास्यौ च कूपेऽस्मिन्, प्रेम्णा चिक्षिपतुः सदा । फेलां तेयाऽभवत् तस्य, वृत्तिर्जीवनमात्रिका ॥ ८०० ॥

---

१ "म मील" पाता० ॥ २ "पायचि" पाता० ॥ ३ "श्ये कदा भोगा" वता० ॥
४ तदाऽम वता० ॥

सोऽथ प्रावृषि कूपोर्द्ध्वगामिभिर्मलवारिभिः । प्रवाह्य बाह्यपरिखां, नीतो वप्रप्रणालकैः ॥ ८०१ ॥
क्षिप्तोऽथ परिखातीरे, लोलकल्लोललीलया । दैवादागतया प्राप्तो, धात्र्या देवतयेव सः ॥ ८०२ ॥
अथ सञ्जीव्य मूर्च्छान्ते, निजं नीतो निकेतनम् ।
अभ्यङ्ग-स्नान-भोज्याद्यैः, पाल्यमानोऽभवन्नवः ॥ ८०३ ॥
अत्र चोपनयो योऽभ्रूल्ललिताङ्गोऽतिकामुकः । अतृप्तः कामभोगेषु, स संसारी शुचिस्मिते ! ॥८०४॥
आपातमधुरो यस्तु, परिणामे सुदुःसहः । राजस्त्रीभोगतुल्योऽसौ, विषयोत्थः सुखोदयः ॥ ८०५ ॥
तत्कूपकल्पगर्भान्तर्वासिनः फेलिकोपमैः । मातृभुक्तान्न-पानाद्यैर्धिगेतस्य भुजिक्रियाम् ॥ ८०६ ॥
कूपादिव ततो गर्भाद्, वाहितस्याथ बाह्यतः । सूतिकासद्मने तस्य, परिखोपमिका स्थितिः ॥ ८०७ ॥
धात्रिकोपमिता चात्र, सर्वोपग्रहकारिणी । सेयं परिणतिः पूर्वकर्मणां परिभाव्यताम् ॥ ८०८ ॥
पुनः पुनर्नवीभूतं, वीक्ष्य राज्ञी स्मरातुरा । अन्तराऽऽकारयेच्चेत्तं, तत् किं तस्यात्र युज्यते ? ॥ ८०९ ॥
अथोचुर्वनिताः सोऽयमल्पबुद्धिरपि प्रभो ! । स्मरन् विष्ठावटोद्भूतदुःखानां तत् करोति किम् ? ॥८१०॥
अथोवाच प्रभुः सोऽपि, कदाचिन्मनुतेऽल्पधीः ।
अहं तु नानुमन्ये वो, वचः संसारकारणम् ॥ ८११ ॥
इति जम्बूकुमारस्य, संवेगामृतनिर्झरैः । वचोभिर्विषयाकाङ्क्षातापस्तासां शमं ययौ ॥ ८१२ ॥
अथोऽन्तरङ्गवैराग्यरसार्द्रीभूतचेतसः । अष्टावपि समं जम्बूकुमारमिदमभ्यधुः ॥ ८१३ ॥
प्रभुखे सुखदैः स्वामिन् !, परिणामेऽतिदुःखदैः । इयत्कालं हहा ! कष्टं, विषयैर्वञ्चिता वयम् ॥ ८१४ ॥
तत् त्वद्विवाहसम्बन्धादन्धाचमसमञ्जनात् । उद्धृताः स्मस्त्वया यद्वा, श्रेयसे सङ्गतं सताम् ॥ ८१५ ॥
आस्थितस्तत् त्वया पन्थाः, श्रितोऽस्माभिरपि स्वयम् ।
सहैवं नेतर्नेतासि, त्वमस्मान् शिवपत्तनम् ॥ ८१६ ॥
उवाच प्रभवोऽप्युच्चैर्महासत्त्व ! भवद्गुणैः । कृष्टस्त्वामनुयास्यामि, पितॄनापृच्छ्य निश्चितम् ॥ ८१७ ॥
मा प्रमादीर्महाभाग !, विवेकोचितमाचरेः । इत्युक्तो जम्बुना यातः, प्रभवो भवनं निजम् ॥ ८१८ ॥
ज्ञात्वा जम्बूकुमारस्य, सदारस्यापि निश्चयम् । श्वशुराः पितरौ चासँस्तमेवानुयियासवः ॥ ८१९ ॥
अथ जम्बूकुमारोऽपि, विधाय जिनपूजनम् । सङ्घं विधिवदभ्यर्च्य, सम्मान्य स्वजनादिकान् ॥ ८२० ॥
स्नानीयगन्धपानीयकृतमज्जनमङ्गलः । चन्दनेन सितध्यानेनेव सर्वाङ्गभासुरः ॥ ८२१ ॥
रत्नाभरणसम्भारैः, सत्त्वसारैरिवाश्रितः । असमैः कुसुमैः स्वस्य, यशोभिरिव शोभितः ॥ ८२२ ॥
लवण्याम्भोधिडिण्डीरपिण्डैरिव सितांशुकैः । दिव्यैः संवीतसर्वाङ्गः, कर्पूरा-ऽगुरुधूपितैः ॥ ८२३ ॥
दानैरानन्दयन् दीनांस्तूर्यैर्मुखरिताम्बरः । वाह्यां नरसहस्रेण, शिबिकामधिरूढवान् ॥ ८२४ ॥
जननान्तरसौहार्दरसेन सहचारिणा । अनादृतेन देवेन, कृतनिष्क्रमणोत्सवः ॥ ८२५ ॥
प्रवेशिताभिराक्रम्य, मैत्र्ये चारित्रभूभृतः । स्मरसेनासमानाभिः, प्रियाभिस्ताभिरन्वितः ॥ ८२६ ॥
स्फूर्जत्त्रयजयारावप्रतिध्वानिनदिग्मुखः । मङ्गल्यपवलध्यानाकृष्टपौरवधूजनः ॥ ८२७ ॥
दुर्घटं घटयन् घण्टापथं पाणिन्धमायितम् । मायूरच्छत्रमण्डेन, मण्डलं तिरयन् रवेः ॥ ८२८ ॥

१ 'छायपोद्भ' पाला० ॥ २ 'ध्याग्मसि निमज्ज' पाला० ॥ ३ 'प नेन नेता' संता० ॥
४ 'रघुसे ऽ' सीम० ॥ ५ 'नमज्जन' संता० ॥ ६ 'भैः कामं, य' सीता० पाला० ॥

आलोक्यमानो लोकेन, विस्मयालोलमौलिना । पौरीभिर्दीयमानाशीरक्षतक्षेपपूर्वकम् ॥ ८२९ ॥
बन्दिवृन्दमुखोद्घुष्टस्मरवीरजयोर्जितः । महामोहमहीपालमभिषेणयितुं ययौ ॥ ८३० ॥

॥ एकादशभिः कुलकम् ॥

सुधर्मस्वामिपादाब्जपावनं वनमीयिवान् । याप्ययानात् समुत्तीर्य, प्रतीष्टाचारमङ्गलः ॥ ८३१ ॥
प्रविश्य मध्यं पञ्चाङ्गसङ्गतक्षितिमण्डलः । प्रणम्य गणभृन्नाथं, जम्बूस्वामी व्यजिज्ञपत् ॥ ८३२ ॥

॥ युग्मम् ॥

संसारसागरोत्तारकर्णधार ! मुनीश्वर ! । मां कुटुम्बं च चारित्रयानपात्रेण तारय ॥ ८३३ ॥
ततः स्वपाणिपद्मेन, गणधारिधुरन्धरः । स्वजनैरन्वितं जम्बूकुमारं तमदीक्षयत् ॥ ८३४ ॥
प्रभवोऽप्यन्यदाऽभ्येत्य, सुधर्मस्वामिसन्निधौ । भावशत्रुप्रतिक्षेपदक्षो दीक्षामुपाददे ॥ ८३५ ॥
गणधारिधुरीणेन, तदानीं प्रभवो मुनिः । कृतः सुकृतवान् जम्बुपादाम्बुजमधुव्रतः ॥ ८३६ ॥
जम्बूप्रभृतिभिः शिष्यैः, कलितः कलभैरिव । अन्यदा गणभृच्चम्पां, यूथनाथ इवागमत् ॥ ८३७ ॥
तस्यां च बहिरुद्याने, गणभृत् सपरिच्छदः । देहिनां देहवान् पुण्यवासरः समवासरत् ॥ ८३८ ॥
ततस्तदीयपादारविन्दवन्दारवो जनाः । आययुर्ययुमुख्यानि, वाहनानि समाश्रिताः ॥ ८३९ ॥
लोकमालोकयन् यान्तं, कोणिकः श्रेणिकात्मजः । सद्यो मेदुरितानन्दो, राजाऽप्युद्यानमागमत् ॥ ८४० ॥
स पुण्यलभ्यमभ्यर्च्य, गणभृच्चरणाम्बुजम् । आसीनः श्रोत्रमसृणामशृणोद्धर्मदेशनाम् ॥ ८४१ ॥
देशनान्ते प्रभोः शिष्यवर्गे जम्बूमुनिं नृपः । पुरः स्मरमिवाद्राक्षीद्, भवभीत्या धृतव्रतम् ॥ ८४२ ॥
अपृच्छच्च प्रभो ! कोऽयं, द्विपेष्विव सुरद्विपः । सुधांशुरिव धिष्ण्येषु, त्रिदशाद्रिरिवाद्रिषु ॥ ८४३ ॥
शालिधान्यमिवान्नेषु, कल्पद्रुम इव द्रुषु । अम्भोधिष्विव दुग्धाब्धिश्चम्पकं कुसुमेष्विव ॥ ८४४ ॥
हिरण्यमिव लोहेषु, रसेष्विव सुधारसः । अद्भुतस्तव शिष्येषु, सविशेषं प्रदीप्यते ! ॥ ८४५ ॥

॥ विशेषकम् ॥

भूनाथं प्रत्यथोवाच, वाचंयमचमूपतिः । श्रीजम्बूस्वामिनः पूर्वजन्मवृत्तान्तमादितः ॥ ८४६ ॥
तपःप्रभावप्रभवं, रूपं सौभाग्यमस्य च । चरमं केवलित्वं च, विच्छेदं च ततः परम् ॥ ८४७ ॥

॥ युग्मम् ॥

तदाकर्ण्य महीनाथो, हृष्टश्चम्पापुरीं ययौ । जम्बूयुतः सुधर्माऽपि, श्रीमहावीरमभ्यगात् ॥ ८४८ ॥
श्रीमहावीरपादान्ते, दान्तेन्द्रियगणो गणी । जन्तुजातोपकाराय, विजहार धरातले ॥ ८४९ ॥
ततः श्रीवीरनिर्वाणाद्, व्यतीत्य दशहायनीम् । जम्बूस्वामिनमाधाय, गच्छभारधुरन्धरम् ॥ ८५० ॥
श्रीसुधर्मगणाधीशो, श्रिते निःश्रेयसश्रियम् । जम्बूः प्रबोधयामास, महीं नवदिवाकरः ॥ ८५१ ॥ युग्मम् ॥
अथ वर्षचतुःषष्टौ, गतायां वीरनिर्वृतेः । श्रीजम्बूस्वामिना चक्रे, गच्छेशः प्रभवः प्रभुः ॥ ८५२ ॥

इत्थं ब्रह्मव्रतमयमहःसंहृतध्वान्तबन्धः,
श्रीमज्जम्बूमुनिदिनपतिर्दत्तविश्वप्रबोधः ।
निःसामान्यक्रमसमुदितोद्दाममाहात्म्यसम्य-
ग्लक्ष्मीं नित्याभ्युदयसुभगम्भावुकामाससाद ॥ ८५३ ॥

१ 'रः स्मेर' पाता० ॥ २ आपृच्छय संता० ॥

जीयात् काचिद् विश्वजैत्री धरित्र्यां, सौभाग्यश्रीरद्भुता जम्बुनाम्नः ।
लब्धे यस्मिन् केवलज्ञानलक्ष्मीर्धन्यंमन्या नान्यमभ्याजगाम ॥ ८५४ ॥

## ॥ इति श्रीविजयसेनसूरिशिष्यश्रीमदुदयप्रभसूरिविरचिते श्रीधर्माभ्युदयनाम्नि श्रीसङ्घपतिचरिते लक्ष्म्यङ्के महाकाव्ये जम्बूस्वामिचरित-वर्णनो नामाष्टमः सर्गः ॥

सेलन्द्रिः स्वरदूषणास्तसुभगैः क्षीराब्धिवन्ध्योद्धतै-[1]
रुच्चै रावणनाशभासुरतमैरेभिर्यशोभिर्निजैः[2] ।
भूमिं भूषयति त्रयी तनुकुलक्षोणीधवस्पर्धया,
श्रीसोमान्वयसम्भवोऽपि सपदि श्रीवस्तुपालः कृती ॥ १ ॥
अन्तः कज्जलमञ्जुलश्रि यदिदं शीतद्युतेर्द्योतते,
[3]तन्मूढाः कथयन्ति लक्ष्म न वयं सूक्ष्मेक्षिकाकाङ्क्षिणः ।
यद् यात्रोत्सवमद्भुतं रचयता श्रीवस्तुपाल ! त्वया,
शीतांशौ लिखितं स्वनाम तदिदं प्रत्यक्षमुद्वीक्ष्यते ॥ २ ॥

॥ ग्रन्थाग्रम् ८६१ । उभयग्रन्थाग्रम्[4] २५४६ ॥

---

१ °न्ध्योद्धुरैरुच्चै संता० पाता० ॥ २ °तरैरे° संता० पता० ॥ ३ यन्मू° पता० ॥
४ °म् २५४७ संता० ॥

